म॰ म॰
टी॰ प॰
१

ॐ श्रीगणेशाय नमः ॥ ॐ विश्वेश्वरं गुरुं नत्वा महिमाख्यस्तुतेरथ पूर्वाचार्यकृतव्याख्यासंग्रहः क्रियते मया १ एवं किलोपाख्यायते कश्चित्किल गंधर्वराजः कुसु-
विद्वान्तः प्रमदावने कुसुमानि हरन्नासीत् तज्ज्ञात्वा च शिवनिर्माल्यलंघनेन मनुष्यचोरस्यांतर्धानादिका सर्वापि शक्तिर्विनंक्ष्यतीत्यभिप्रायेण राज्ञा शिवनि-
र्माल्यं पथि निक्षिप्तं तदप्रतिसंधाय च गंधर्वराजस्तत्र प्रविशन्नेव कुंठशक्तिर्बभूव ततश्च शिवनिर्माल्यलंघनेनैव ममेदृशं वैकल्यमिति प्रणिधानेन विदित्वा पर-
कारुणिकं भगवंतं सर्वकामदं तमेव तुष्टाव ननु स्तुतिर्नाम गुणकथनं तच्च गुणज्ञानाधीनं अज्ञातस्य कथनासंभवात् तथा च भगवतो गुणानामनंत-
त्वेन ज्ञातुमशक्यत्वात्कथं तत्कथनरूपा स्तुतिरनुरूपा भवेत् अननुरूपकरणं चोपहासायैवेति शंकायां तदपनोदनव्याजेन स्वस्यानौद्धत्यं दर्शयन्नेव भग-
वंतं स्तोतुमारभते महिम्नः पारं त इति हे हर सर्वाणि दुःखानि हरतीति हरः योग्यसंबोधनं सर्वदुःखहरत्वेनैव प्रसिद्धोसि न मम दुःखहरणे इत्थं व्यापारं

॥ महिम्नः पारं ते परमविदुषो यद्यसदृशी स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः अथावाच्यः सर्वः स्वमतिपरिणा-
मावधि गृणन्ममाप्येष स्तोत्रे हर निरपवादः परिकरः ॥ १ ॥

॥ करिष्यसीत्यभिप्रायः हे सर्वदुःखहर तव महिम्नः परं पारं अवधिं
अविदुषः एतावानेव महिमेतीयत्तया अजानतः कर्तरि षष्ठी अज्ञातकर्तृका स्तुतिर्यदि असदृशी अननुरूपा अयोग्येति यावत् तत्तर्हि ब्रह्मादीनां सर्वज्ञाना-
मपि गुणकथनरूपा गिरः त्वयि विषये अवसन्ना अयोग्या एवेत्यर्थः तेषामपीयत्तया अज्ञानात् इयत्तायाः असत्त्वेन तदज्ञाने सार्वज्ञ्यव्याघातोपि न सन्मात्र-
विषयत्वात्सार्वज्ञ्यस्य अन्यथा भ्रांतत्वप्रसंगात् तथा च श्रीभागवते विष्णोर्नु वीर्यगणनां कतमोर्हतीह यः पार्थिवान्यपि कविर्विममे रजांसीति अथेति
पक्षांतरे यद्येवं ब्रूषे स्वमतिपरिणामावधि स्वस्य मतिपरिणामो बुद्धिविषयता स एवावधिर्यत्रेति क्रियाविशेषणं स्वबुद्ध्या यावद्विषयीकृतं तावद्गृणन्वाक्सौष्ठसा-
फल्याय कथयन्सर्वोपि स्तोता वाच्यः अनुपालंभनीयः सा वाग्यया तस्य गुणान् गृणीते जिज्ञासतो दाईरिके वृत्त न चोपगायत्युरुगायगाथा इति च श्रीभाग-
वतवचनात् नहि नभः पतंत्यात्मसमं पतत्त्रिण इति न्यायेन ममापि एष परिकरः आरंभः स्तोत्रे स्तुतिविषये निरपवादः अखंडनीयः स्वबुद्ध्यनुसारेण योग्य इ-

अथ हरः सर्वो...

त्यर्थः प्रथमार्द्धेन स्तुतिनिराकरणव्याजेन सर्वेदुरधिगममहिमत्वरूपा महती स्तुतिः कृता उत्तरार्द्धेन स्तुतिसमाधानव्याजेन सर्वस्तुत्यत्वरूपेति महत्कौशलं
अन्यत्त्वगंधर्वराजस्य महाकुशलत्वादेकेनैव श्लोकेन यथाश्रुतिवक्ररीत्या च हरिशंकरयोः स्तुतिस्तयोरभेदज्ञानाया भिप्रेतात्र हरपक्षे यथाश्रुति व्याख्याते
हरिपक्षेपि तदेव योजनीयं संबोधनपदं तु अहरेति हरतीति हरः संहर्तीति हि रुद्रो हरः पालयितेत्यर्थः अथवा अपि अहो हे परम परा मा लक्ष्मीर्यस्येति तथा
हे लक्ष्मीपते लक्ष्मीपतित्वान्ममालक्ष्मीस्त्वत एव नाशयिष्यसीति योग्यं संबोधनं यदि तत्त्वत्संबंधिनी त्वद्विषया स्तुतिः चेत्तर्हि अवसन्ना असदृशी अननु
रूपापि अस्तु न त्वन्यदेवानां अनल्पा अनुरूपापि अत्र हेतुगर्भविशेषणं तव कीदृशस्य ब्रह्मादीनां स्तावकानां गिरः स्तुतिरूपायाः पारं विदुषः स्तोतुः अ
मस्तुतेर्गुणदोषौ च जानत इत्यर्थः सर्वदेवस्तुत्यत्वेन निरतिशयसार्वज्ञ्येन च तवैव सर्वोत्कृष्टत्वादित्यभिप्रायः स्तुफलं दर्शयन् स्वस्य विनयातिशयं
दर्शयितुमाह अथ स्वत्वां अतिपरिणामावधि अतिक्रांतो बुद्धिपरिणामावधिः सीमा यत्र तादृशं यथा स्यात्तथा स्वशक्तिमतिक्रम्यापि गृणन् स्तुवन् सर्वो
पि जनः अवाच्यः आभिमुख्येन वाच्यः संभाषणीयस्त्वयेत्यर्थः यस्मादेवं सर्वदैवानुगृह्यते त्वया स्तोता अतएव ममापि स्तोत्रस्तुतिकर्त्रे एष परिकरो न
मस्कारादि प्रबंधः यद्विषयकस्तुतिकर्तृत्वेनान्येपि सर्वदा नमस्याः किमु वक्तव्यं सर्वदा स सर्वेषां नमस्यतरो भवतीति भगवतिरत्यतिशयो व्यज्यते
एवं यस्यायोग्यापि स्तुतिः सान्निध्यरूपा तस्य योग्या स्तुतिः किंवा सा न फलिष्यतीति ध्वनितं हरपक्षेप्येवं तत्र परमश्रेष्ठेति संबोधनम् ॥२॥ पुन
स्य स्तुत्यत्वेनैव भगवतो स्तौति पूर्वोक्तस्वस्य ब्रह्मादिसाम्यमुपपादयन् अतीतः पंथानमिति पूर्वसंबोधनमावर्त्तनीयं तव महिमा सगुणो निर्गुण
श्च वाङ्मनसयोः पंथानं विषयं च अतीतः अतिक्रांतः चशब्दोऽवधारणे अतीत एवेत्यर्थः अनंतत्वान्निर्द्धर्मकत्वाच्च तथा च श्रुतिः यतो वाचो
निवर्त्तंते अप्राप्य मनसा सहेति वागविषयत्वे तत्र श्रुतेः प्रामाण्यं न स्यादित्याशंक्याह यं श्रुतिरपि अपौरुषेयापि वेदवाणी चकितं भीतं यथा स्यात्तथा
भिधत्ते तात्पर्येणैव प्रतिपादयति सगुणपक्षे किंचिदप्यनुक्तं माभूदिति निर्गुणपक्षे तु स्वप्रकाशस्यान्याधीनप्रकाशता माभूदिति भयं केन प्रकारेण अतद्व्या

2

वृत्तिस्तया अभेदेनेत्यर्थः सर्वंखल्विदंब्रह्म सर्वकर्मासर्वकामइत्यादिवाक्यं सर्वाभेदेनैवभगवंतंप्रतिपादयतिनत्वेकैकशोमहिमानंवदतीत्यर्थः निर्गुणपक्षेतुनन
तं अतत् अविद्यातत्कार्यात्मकमुपाधिद्वयमितियावत् तद्व्यावृत्यातत्परित्यागेन जहदजहल्लक्षणयेत्यर्थः मायाविद्योपहितचैतन्यशक्तंतत्पदं तत्कार्यबु
ध्याद्युपहितचैतन्यशक्तंत्वंपदं उपाधिभागत्यागेनानुपहितचैतन्यस्वरूपंस्वप्रकाशमपितदाकारवृत्तिमात्रजननेनाविद्यातत्कार्यनिवृत्याबोध्यतइत्येवेतिनताव
तावाग्विषयत्वमुक्तंतस्येत्यर्थः अतएवसतादृशः सगुणोनिर्गुणश्चमहिमाकस्यस्तोतव्यः कत्रैविषयीनकेनापिस्तोतुंशक्यइत्यर्थः सगुणस्यस्तोतव्यत्वाभावेहेतुमाह
कतिविधगुणःकतिविधा अनेकप्रकारागुणायत्रसतथा अनंतत्वादेवनस्तुत्यइत्यर्थः निर्गुणस्यस्तोतव्यत्वाभावेहेतुमाह कस्यविषयइतिनकस्यापिविषयोनिर्धर्मक
त्वात् अतएवाविषयत्वान्नस्तुत्यइत्यर्थः सगुणोज्ञेयत्वेप्यनंतत्वान्निर्गुणस्त्वेकरूपोपिज्ञेयत्वाभावान्नस्तुत्यइत्यर्थश्चेत्तर्हिस्वमतिपरिणामावधिगृणन्निति पूर्वोक्तं

॥ अतीतःपंथानंतवचमहिमावाङ्मनसयोरतद्व्यावृत्यायंचकितमभिधत्तेश्रुतिरपि सकस्यस्तोतव्यःकतिविधगुणःकस्यविषयःपदेत्ववीचीनेपततिनमनःकस्यनवचः ॥२॥ ॥

विरुद्धेतेत्यतआह पदेत्विति अर्वाचीनेनवीनेभक्तानुग्र
हार्थंलीलयागृहीते वृषभपिनाकपार्वत्यादिविशिष्टरूपेकस्यविदुषोमनोनपतति न आविशति कस्यवचोनाविशति अपितुसर्वस्यापिमनोवचसीविश
तीत्यर्थः तत्रहिरण्यगर्भस्याप्यस्मदादेश्चसममेवस्तुतिकर्तृत्वमितिनपूर्वापरविरोधः हरिपक्षेप्येवं अथवायं अतद्व्यावृत्याकार्यप्रपंचभेदाच्चकितंभीतंसद्भिन्नत्वेनका
र्यप्रपंचमापश्यत्तुशंकमानंश्रुतिरभिधत्तइतिपूर्ववत् अर्वाचीनेपदेतुकमलकंबुकौमोदकीरथांगकमलालयाकौस्तुभाद्युपलक्षितेनवजलधरश्यामधाम
नि श्रीविग्रहेवैकुंठवर्तिनिवेणुवादनादिविविधविहारपरायणेगोपकिशोरेवावृंदावनवर्तिनिकस्यमनोनआपततिकस्यवचःनआपततिअपगतातातिविस्ता
रोयस्मात्तत् अपततिसंकुचितमित्यर्थः तवश्रीविग्रहानुचिंतनेतद्गुणानुकथनेचविषयांतरपरित्यागेनविलीयमानावस्थमनोवचश्चैकमात्रविषयतयासं
कुचितंभवतितवश्रीविग्रहएवासक्तंभवतीतिभावः ॥२॥

नन्वेवं स्तुत्यत्वेऽपि हरिहरयोः सर्वज्ञयोरनभिनवया स्तुत्या नो मनोनुरञ्जनं तद्द्वारेण तत्प्रसादस्तं विना न फलमिति पुनरपि स्तुतेर्वैयर्थ्यमाशङ्क्य सार्थकत्वं दर्शयन् स्तौति मधुस्फी
तावाचः इति हे ब्रह्मन् विभो सुरगुरोर्ब्रह्मणोऽपि वाक् वाणी तव किं विस्मयपदं चमत्कारकारणं किंशब्द आक्षेपेनेत्यर्थः तत्र हेतुगर्भं विशेषणमाह तव कीदृशस्य वाचो
वेदलक्षणाः निर्मितवतो निःश्वासवदनायासेनाविर्भावितवतः कीदृशीं मधुवत् स्फीता माधुर्यादिशब्दगुणालंकारविशिष्टत्वेन मधुराः तथा परमममृतं निरतिश
यामृतवदत्यास्वाद्याः एतेनार्थगतमाधुर्यमुक्तं परमेश्वरवाचां शब्दार्थगतयोर्निरतिशयमाधुर्ययोरपि मिथस्तारतम्यं मध्वमृतशब्दाभ्यां द्योत्यते अयं च वाचामुत्कर्षो
महान् यच्छब्दगुणालंकारातिशयिनोऽर्थगुणालंकारा इति यत्र हिरण्यगर्भस्य वाण्यपि न चमत्कारकारणं तत्र का वार्त्ताः स्मरादिवाण्य इत्यर्थः तर्हि किं स्तुत्येत्यत आ
ह मम त्वित्यादि हे पुरमथन त्रिपुरान्तक भवतो गुणकथनपुण्येन एतां स्वां वाणीं पुनामि निर्मलीकरोमीत्यभिप्रायेणात्रास्मिन्नर्थे स्तुतिरूपे मम बुद्धिर्व्यवसिता उद्यता न तु

**मधुस्फीता वाचः परमममृतं निर्मितवतस्तव ब्रह्मन् किं वागपि सुरगुरोर्विस्मयपदम् मम त्वेतां वाणीं गुणकथनपुण्येन भवतः पुनामीत्यर्थेऽस्मिन्पुरमथन बुद्धिर्व्यवसिता ॥३॥**

स्तुतिकौशलेन त्वां रञ्जयामीत्यभिप्रायेणेत्यर्थः वा
ङ्मलस्य मनोनैर्मल्यं नान्तरीयकमिति स्तुतिसार्थक्यमुक्तं हरिपक्षेऽप्येवं मथ्यतेऽस्मिन् दध्यादीनीति मथनं गोकुलं अथवा मथ्यते योऽमृतार्थमिति मथनः क्षी
रोदः पुरं मन्दिरं गोकुलं क्षीरोदो वा यस्येति पुरमथन संबोधनार्थः सर्वमन्यत्समानं अथवा हे ब्रह्मन् वाचः सर्वस्या अपि परमममृतं निरतिशयसारं नि
श्चयेन मितवतः सम्यगनुभूतवतः सुरगुरोर्हिरण्यगर्भादिसर्वदेवतोपाध्यायस्य तव मधुस्फीता मधुरिम्णा व्याप्ता अत एव कटुत्वलेशेनापि रहिता वाग्दे
वता सरस्वत्यपि किं विस्मयपदं नेत्यर्थः तस्यां महच्च महत्तरमतिप्रसिद्धमेव यद्यप्येवं तथापि त्वद्दिदृक्षयैव ममेयं प्रवृत्तिरित्याह मम त्वेतामिति निजगुणक
थनपुण्येन मम त्वेतां मम लेवर्त्तमानां संसारसंसर्गकलुषितां वाचं एतस्य स्तुतिकर्तुरिति शेषः पुनामि निःकलुषां करोमीत्यस्मिन्नर्थे हे पुरमथन भवतो बुद्धिर्व्य
वसिता यतोऽतोऽनायत्यैव मम प्रवृत्तिरित्यर्थः श्रुतिश्च भवति एष उ ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म कारयति तं यम

3

म० स्तो०
टी० म०
२

योनिनीषतइति स्मृतिश्च अज्ञोजंतुरनीशोयमात्मनः सुखदुःखयोः ईश्वरप्रेरितोगच्छेत्स्वर्गंवाश्वभ्रमेववेतितेन परमकारुणिकत्वशरणागतवाणीपावनपुण्यहे
तुस्तुतितत्परंलोकंकर्तुंस्वयमेवप्रवर्तमानायया कयापिस्तुत्याप्रसीदतीत्यर्थः ३ एवंहरिहरयोः स्तुत्यत्वंसफलस्तुतिकर्तृत्वंचनिरूप्यैकचित्तायोपास्यतत्सद्भावेपिवि
वदंतेतान्निराकुर्वन्स्तौतितवैश्वर्यंयत्तज्जगदुदयरक्षाप्रलयकृदितिहेवरद ईप्सितप्रदयत्तवैश्वर्यंतद्विहंतुंनिराकर्तुंएकेजडधियः केचिन्मंदमतयः आक्रोशीं विदधते।
साक्षेपमुच्चैर्भाषणमाक्रोशः तस्यव्यतिहारोव्याक्रोशी अनेनकर्तुमारब्धमन्यः करोत्यन्येनचान्यइतिकर्मव्यतिहारः व्याङ्पूर्वाक्रोशतेःकर्मव्यतीहारेतिच् ततःस्वार्थेऽञ
स्यचस्त्रियामञितिसूत्रात्ततःस्त्रियांङीप् तांव्याक्रोशीमहमिकयाकुर्वते यत्सर्वप्रमाणप्रमितंतदपिजिघांसतीतियत्तज्ञामंदबुद्धित्वंद्योतितं अतएवकर्त्रभिप्राये
क्रियाफलेविदधीतचात्मनेपदंनहिनत् व्याक्रोशीविधानात्तवैश्वर्यव्याघातः किंतुतेषामेवाधःपातइत्यर्थः कीदृशंतवैश्वर्यंजगदुदयरक्षाप्रलयकृत् जगतआका

॥ तवैश्वर्यंयत्तज्जगदुदयरक्षाप्रलयकृत्त्रयीवस्तुव्यस्तंतिसृषुगुणभिन्नासुतनुषु अभव्यानामस्मिन्वरदरमणीयामरमणीम् ॥
॥ विहंतुंव्याक्रोशींविदधतइहैकेजडधियः ॥४॥

॥ शादिप्रपंचस्य उदयंसृष्टिंरक्षांस्थितिं प्रलयंसंहारंचकरो
तीतितथा अनेनानुमानप्रमाणमुक्तंतच्चाजन्मानोलोकाइत्यत्रव्यक्तंवक्ष्यते तथात्रयीवस्तु त्रय्यावेदान्तानांतात्पर्येणप्रतिपाद्यं सर्वेवेदायत्पदमामनंती
तिश्रुतेः अनेनागमप्रमाणमुक्तंतथागुणैःसत्वरजस्तमोभिः लीलयोपात्ते भिन्नासुपृथक्कृतासुतनुषुवस्तुगत्याभेदइत्यर्थः तिसृषुतनुषु ब्रह्मविष्णुमहेश्व
राख्यासुमूर्त्तिषुव्यस्तंविविच्यन्यस्तंप्रकटीकृतमितियावत् उपलक्षणंचैतत्सर्वेषामवताराणां एतेनप्रत्यक्षप्रमाणमुक्तंतेनसर्वप्रमाणप्रमितमित्यर्थः॥
कीदृशीं अस्मिन् अभव्यानां अस्मिन्त्रैलोक्येनास्तिभव्यंभद्रंकल्याणंयेषांते अभव्यास्तेषांरमणीयांमनोहरांवस्तुतस्तु अरमणीं अमनोहरां अमनोहरेपिम
नोहरबुद्धिरभाग्यातिशयात्तेषामित्यर्थः हरिपक्षेप्येवं अथवा अस्मिन्तवैश्वर्ये अभव्यानांमध्येजडधियोजडमतेरत्यंतमपकृष्टस्येत्यर्थः तस्यवस्तुनोऽरमणीं।
व्याक्रोशींविहंतुं एकेमुख्यारमणीयांव्याक्रोशींविदधतइत्यर्थः जडधियइत्येकवचनेनपूर्वपक्षिणस्तुच्छत्वं एकइतिबहुवचनेनसिद्धांतिनामतिमहत्वंसूचितम्॥४॥ २

येत्वात्मप्रत्यक्षमपह्नुवते त्रयीं चान्यथा वर्णयंतिते अनुमानेनैव निराकार्याः तच्चानुमानं क्षित्यादि सकर्तृकं कार्यत्वात् घटवत् इति जगदुदयरक्षाप्रलयकृदि
त्यनेन सूचितं तत्र पूर्वश्लोकोक्तव्याक्रोशीं विदधत इत्याकांक्षायां तान्वदन् स्तौति किमीहः किंकाय इति हे वरदेति पूर्वश्लोकात् संबोधनानुषंगः त्वयि विषयेऽ
यं कुतर्कः तर्काभासः काश्चित् हतधियः कानपि दुष्टबुद्धीन् जगतो विश्वस्यापि मोहाय अन्यथा प्रतिपत्तये मुखरयति वाचालान्करोति त्वयि कीदृशे अतर्क्या
तर्कागोचरमैश्वर्यं यस्य तस्मिन् सर्वतर्कागोचरे त्वयि यः कश्चित्तर्कः स्वातंत्र्येणोपन्यस्यते स सर्वोऽप्याभास इत्यर्थः प्रमाणानां स्वागोचरत्वात् स्वागोचरे प्रामा
ण्याभावो युक्त एवेति भावः कुतर्कमेवाह किमीह इत्यादिना स धाता परमेश्वरः त्रिभुवनं सृजति इति सिद्धांतमनूद्य तत्र दूषणमाह खलु किंतु किमीहः का ईहा चे
ष्टा यस्येति तथा कः कायः शरीरं कर्तृरूपमस्येति किंकायः कः उपायः सहकारिकारणमस्येति किमुपायः क आधारोऽधिकरणमस्येति किमाधारः किमुपादानं

किमीहः किंकायः स खलु किमुपायस्त्रिभुवनं किमाधारो धाता सृजति किमुपादान इति च अतर्क्यैश्वर्ये त्व
य्यनवसरदुःस्थो हतधियः कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः ॥५॥ ॥ ❖ ॥ ॥

समवायिकारणं भुवनाकारेण निष्पाद्यमस्येति किमुपादानः सर्वत्र किंशब्द आक्षेपे इति शब्दः प्रकारार्थे चशब्दः शंकांतरसमुच्चयार्थः कुलालो हि घ
टं कुर्वन् स्वशरीरेण व्याप्रियमाणेन चक्रभ्रमणादिचेष्टया सलिलसूत्राद्युपायेन चक्रादावाधारे मृदमुपादानभूतां घटाकारां करोति एवं जगत्कर्त्रापि वाच्यः तथ
च कुलालादिवदनीश्वर एवेत्यभिप्रायः घटादिदृष्टांतेन खल्वक्षित्यादेः सकर्तृत्वं साध्यते तथा च घटादिकर्तृत्वौपाधिकं यावद्दृष्टं क्षित्यादिकर्तर्यपि तावदवश्यमंगीक
र्तव्यं दृष्टांतस्य तुल्यत्वात् तथा चोभयतः पाशारज्जुः तदंगीकारे अस्मदादितुल्यत्वादनीश्वरत्वं तदनंगीकारे च कर्तृत्वानुपपत्त्याऽसिद्धिरेवेत्येवं कुतर्क इत्यर्थः सिद्धांतं वद
न् तर्कं विशिनष्टि अनवसरदुःस्थः नास्त्यवसरोऽवकाशोऽस्येत्यनवसरः अत एव दुःस्थः दुष्टत्वेन स्थितः विचित्रनानाशक्तिमायावशेन सर्वं निर्मातरि सर्वतर्कागोच
रे त्वयि नास्ति कुतर्कावसर इत्यर्थः तथा चोक्तं अचिंत्याः खलु ये भावा न तांस्तर्केण योजयेदिति नच घटादिकर्तरि यावद्दृष्टं तावत् क्षित्यादिकर्तर्यपि साधनी ॥

म॰ स्तु॰ टी॰ न॰ ४

यं व्याप्तिंविना समानाधिकरण्यमात्रस्यासाधकत्वात् अन्यथामहानसे धूमवह्न्यो व्याप्तिग्रहसमये व्यंजनादिसत्त्वमपि दृष्टमिति पर्वतादावपि तदनुमानं स्यात् तस्मात्साधर्म्यसमाजातिरेषा स्वव्याघातकत्वादर्थांतरं पराक्रांतं चात्र सूरिभिरित्युपरम्यते हरिपदे त्वेवम् ५ एवं प्रतिकूलतर्कं परिहृत्यानुकूलतर्कमुद्भावयन्स्तौति अजन्मानो लोका इति हे अमरवर सर्वदेवश्रेष्ठ अवयववंतोपि सावयवा अपि लोकाः क्षित्यादयः किमजन्मानः जन्महीनाः किंतु जन्या एवेत्यर्थः तेन सावयवत्वेन क्षित्यादेर्जन्यत्वहेतोरसिद्धत्वं यावद्विकारं तु विभागो लोकवदिति न्यायात् सत्त्वसमानसत्ताकभेदप्रतियोगित्वेनैव जन्यत्वनियमाच्च तथा जगतां क्षित्यादीनां भवविधिरुत्पत्तिक्रिया अधिष्ठातारं कर्तारं अनादृत्य अनपेक्ष्य किं भवति अपि तु अपेक्ष्यैव भवतीत्यर्थः तेन कार्यत्वसकर्तृकत्वयोर्व्यभिचा

अजन्मानो लोकाः किमवयववंतोपि जगतामधिष्ठातारं किं भवविधिरनादृत्य भवति अनीशो वा कुर्याद्भु
वनजनने कः परिकरो यतो मंदास्त्वां प्रत्यमरवर संशेरत इमे ॥ ६ ॥ ❖ ॥ ❖ ॥ ❖ ॥

रात्तानैकांतिकत्वं हेतोः तथा अनीशो वा ईश्वरादन्यो वा यदि कुर्यात्तर्हि भुवनजनने कः परिकरः का सामग्री अनीश्वरस्य स्वशरीररचनाप्यजानतो विचित्रचतुर्दशभुवनरचनाऽसंभवादीश्वर एव रचनां करोतीत्यर्थः परिकरमिति पाठे को वाऽनीश्वरः भुवनजनने परिकरमारंभं कुर्यात् अपि तु ईश्वर एव कुर्यादित्यर्थः एतेनार्थांतरता परिहृता एवमनुमानदोषानुद्धृत्याशंकितदोषांतरं निराकुर्वन्नुपसंहरति यत इति यत एवं सर्वप्रमाणसिद्धस्त्वमतस्ते मंदा मूढाः ननु विद्वांसः इमे ये त्वां प्रति संशेरते संदेहवंतः किमुत विपर्ययवंत इत्यर्थः जन्माद्यस्य यत इति न्यायेन यतो वा इमानि भूतानि जायंते येन जातानि जीवंति यत्प्रयंत्यभिसंविशंति तद्ब्रह्म आनंदो ब्रह्मेति व्यजानादित्यादि श्रुतिरेव परमेश्वरे प्रमाणं अनुमानं त्वनुकूलतर्कमात्रं श्रुतेर्न स्वातंत्र्येण प्रमाणमिति द्रष्टव्यं हरिपदे त्वेवं

त्रयीति

एवंभगवद्विमुखान्निरस्यसर्वेषांशास्त्रप्रस्थानानांभगवत्येवतात्पर्यंसाक्षात्परंपरयावेतिवदन्स्तौतिहेअमरवरनानाअसंकीर्णाःपंथानःनानापंथाःऋज
वश्चकुटिलाश्चऋजुकुटिलाःऋजुकुटिलाश्चतेनानापंथाश्चेतिऋजुकुटिलनानापंथाःतान्जुषंतेभजंतीतितथातेषांनृणांअधिकार्यनधिकारिसाधारणा
नांतत्साधनानुष्ठानैःसाक्षात्परंपरयावात्वमेवएकोगम्यःप्राप्यःनान्यःकश्चिदित्यर्थःतत्रदृष्टांतमाहपयसामर्णवइवयथाऋजुपथजुषांगंगादिपयसांसा
क्षादर्णवोगम्यःयथावाकुटिलपथजुषांसरय्वादीनांगंगादिप्रवेशद्वारापरंपरया एवंवेदांतवाक्यश्रवणमननादिनिष्ठानांसाक्षात्त्वंप्राप्यः अन्येषामंतःकरण
शुद्धिद्वाराक्रमेणपरंपरयात्वमेवप्राप्यःचेतनत्वेनैवमोक्षयोग्यत्वाभ्युपगमात् अपराणामनभ्युपगमाच्चेत्यर्थः ननुऋजुमार्गेसतितंविहायकिमितिकुटिलमा
र्गंभजंतेऋजुमार्गस्यैवशीघ्रफलदायित्वादित्यतआह प्रभिन्नेप्रस्थाने इदंपरंपथ्यमदःपथ्यमितिरुचीनांवैचित्र्यात्तस्मिंस्तस्मिन्शास्त्रप्रस्थानेइदमेव

त्रयीसांख्यंयोगःपशुपतिमतंवैष्णवमितिप्रभिन्नेप्रस्थानेपरमिदमदःपथ्यमितिच रु
चीनांवैचित्र्यादृजुकुटिलनानापथजुषांनृणामेकोगम्यस्त्वमसिपयसामर्णवइव॥७॥

श्रेष्ठमिदमेवममहितमितिइच्छाविशेषाणामनेकप्रकारत्वात्प्राग्भवीयतत्तत्कर्मवासनावशेननॄणांऋजुकुटिलत्वनिश्चयासामर्थ्यात्कुटिलेऽप्यृजु
भ्रांत्याप्रवर्तंतेइत्यर्थः प्रस्थानभेदमेवदर्शयति त्रयीसांख्यंयोगःपशुपतिमतंवैष्णवमितिसर्वशास्त्रोपलक्षणमेतत् तथाहित्रयीशब्देनवेदत्रयीवा
चिनातदुपलक्षिताअष्टादशविद्याअप्यत्रविवक्षिताःतत्रऋग्वेदोयजुर्वेदःसामवेदोऽथर्ववेदइतिवेदाश्चत्वारःशिक्षाकल्पोव्याकरणंनिरुक्तंछंदोज्योतिषमि
तिवेदांगानिषट्पुराणंन्यायोमीमांसाधर्मशास्त्राणिचेतिचत्वार्युपांगानि अत्रउपपुराणानामपिपुराणेऽन्तर्भावःवैशेषिकशास्त्रस्यन्यायेवेदांतशास्त्रस्यमीमांसायांम
हाभारतरामायणयोःसांख्यपातंजलपाशुपतवैष्णवादीनांधर्मशास्त्रेषुमिलित्वाचतुर्दशविद्याःतथाचोक्तंपुराणन्यायमीमांसाधर्मशास्त्रांगमिश्रिताःवेदाःस्थानानि

म॰ स्व॰
टी॰ म॰
५

विद्यानांधर्मस्यचचतुर्दशेति एताएवचतुर्भिरुपवेदैः सहिताःऽष्टादशविद्याभवंति आयुर्वेदोधनुर्वेदोगांधर्ववेदोऽर्थशास्त्रंचेतिचत्वारउपवेदाः ताएताअष्टाद-
शविद्यास्त्रयीसांख्यमित्यादिनोपन्यस्ताः अन्यथान्यूनताप्रसंगात् सर्वेषांचास्तिकानामेतावंत्येवशास्त्रप्रस्थानानि अन्येषामप्येकदेशिनामेष्वेवांतर्भावात् न
चनास्तिकानामपिप्रस्थानांतराणिसंतितान्येतेष्वनंतर्भावात्पृथग्गणयितुमुचितानि तथाहिशून्यवादेनैकंप्रस्थानंमाध्यमिकानां १ क्षणिकविज्ञानमात्र
वादेनयोगाचाराणां २ ज्ञानाकारानुमेयक्षणिकबाह्यार्थवादेनापरंसौत्रांतिकानां ३ प्रत्यक्षस्वलक्षणक्षणिकबाह्यार्थवादेनापरंवैभाषिकानां ४ एवं
सौगतानांप्रस्थानचतुष्टयं तथादेहात्मवादेनैकंप्रस्थानंचार्वाकानां ५ एवंदेहातिरिक्तदेहपरिमाणात्मवादेनद्वितीयंप्रस्थानंदिगंबराणां ६ एवं
मिलित्वानास्तिकानांषट्प्रस्थानानितानिकस्मान्नोच्यंते सत्यंवेदबाह्यत्वात्तेषांम्लेच्छादिप्रस्थानवत्परंपरयापिपुरुषार्थानुपयोगित्वादुपेक्षणीयत्वने-
वइहचसाक्षात्परंपरयावापरमार्थोपयोगिनांवेदोपकरणानामेवप्रस्थानानांभेदोदर्शितः ततोनन्यूनत्वशंकावकाशः अथसंक्षेपेणैषांप्रस्थानानांस्व
रूपभेदहेतुःप्रयोजनभेदउच्यतेबालानांव्युत्पत्तये तत्रधर्मब्रह्मप्रतिपादकमपौरुषेयंप्रमाणवाक्यंवेदः सचमंत्रब्राह्मणात्मकः तत्रमंत्राअनुष्ठानकारक
भूतद्रव्यदेवताप्रकाशकाः तेत्रिविधाः ऋग्यजुःसामभेदात् तत्रपादबद्धगायत्र्यादिछंदोविशिष्टाऋचः अग्निमीळेपुरोहितमित्याद्याः ताएवगीतिविशिष्टाः
सामानितदुभयविलक्षणानियजूंषि अग्नीदग्नीन् विहरेत्यादिसंबोधनरूपाणिनिगदमंत्राः अपियजुरंतर्भूताएवतदेवंनिरूपितामंत्राः ब्राह्मणमपि
त्रिविधं विधिरूपमर्थवादरूपंतदुभयविलक्षणंच तत्रशाब्दभावनाविधिरितिभट्टाः नियोगोविधिरितिप्राभाकराः इष्टसाधनताविधिरितितार्किका
दयःसर्वे विधिश्चतुर्विधः उत्पत्त्यधिकार२विनियोग३प्रयोग४भेदात् तत्रकर्मस्वरूपमात्रबोधकोविधिरुत्पत्तिविधिः आग्नेयोऽष्टाकपालोभवतीत्या
दि १ सेतिकर्तव्यताकस्यकरणस्ययागादेः फलसंबंधबोधकोविधिरधिकारविधिः दर्शपूर्णमासाभ्यांस्वर्गकामोयजेतेत्यादि ॥२॥ अंगसंबं

धवोधको विधिर्विनियोगविधिः व्रीहिभिर्यजेत समिधो यजतीत्यादि ३ सांगप्रधानकर्मप्रयोगैक्यबोधकः पूर्वोक्तविधित्रयमेलनरूपः प्रयोगविधिः ४ स
च श्रौत इत्येके कल्प्य इत्यपरे कर्मस्वरूपं च द्विविधं गुणकर्म अर्थकर्म च तत्र क्रतुकारकाण्याश्रित्य विहितं गुणकर्म तदपि चतुर्विधं उत्पत्त्याप्तिविकृतिसं
स्कृतिभेदात् तत्र वसंते ब्राह्मणो ग्नीनादधीत यूपं तक्षतीत्यादौ आधानतक्षणादिना संस्कारविशेषविशिष्टाग्नियूपादेरुत्पत्तिः स्वाध्यायोऽध्येतव्यः गां पयो
दोग्धीत्यादावध्ययनदोहनादिना विद्यमानस्यैव स्वाध्यायपयःप्रभृतेः प्राप्तिः सोममभिषुणोति व्रीहीनवहंति आज्यं विलापयतीत्यादौ अभिषवावघात
विलापनैः सोमादीनां विकारः व्रीहीन्प्रोक्षति पत्न्यवेक्षते इत्यादौ प्रोक्षणावेक्षणादिभिः व्रीह्याज्यादिद्रव्याणां संस्कारः एतच्चतुष्टयं चांगमेव तथा क्रतुकार
कान्यनाश्रित्य विहितं अर्थकर्म तच्च द्विविधं अंगं प्रधानं च अन्यार्थमंगं अनन्यार्थं प्रधानं अंगमपि द्विविधं सन्निपत्योपकारकमारादुपकारकं च तत्र प्रधा
नस्वरूपनिर्वाहकं प्रथमं फलोपकारि द्वितीयं एवं संपूर्णांगसंयुक्तो विधिः प्रकृतिः विकलांगसंयुक्तो विधिः विकृतिः तदुभयविलक्षणो विधिर्दर्वीहोमः एव
मन्यस्मिन्नूह्यं तदेवं निरूपितो विधिविभागः प्राशस्त्यनिंदान्यतरलक्षणया विधिशेषभूतं वाक्यमर्थवादः स च त्रिविधः गुणवादो भूतार्थवादश्चेति तत्र प्रमाणां
तरविरुद्धार्थबोधको गुणवादः आदित्यो यूप इत्यादि प्रमाणांतरप्राप्तार्थबोधकोऽनुवादः अग्निर्हिमस्य भेषजमित्यादि प्रमाणांतरविरोधतत्प्राप्तिरहितार्थबोध
को भूतार्थवादः इंद्रो वृत्राय वज्रमुदयच्छदित्यादि तदुक्तं विरोधे गुणवादः स्यादनुवादोऽवधारिते भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मत इति तत्र त्रिविधानामप्य
र्थवादानां विधिस्तुतिपरत्वे समानेऽपि भूतार्थवादानां स्वार्थेऽपि प्रामाण्यं देवताधिकरणन्यायात् अबाधिताज्ञातज्ञापकत्वं हि प्रामाण्यं तच्च बाधितविषयत्वान्नज्ञा
पकत्वाच्च न गुणवादानुवादयोः भूतार्थवादस्य तु स्वार्थे तात्पर्यरहितस्यौत्सर्गिकं प्रामाण्यं न हि विहन्यते तदेवं निरूपितोऽर्थवादभागः विध्यर्थवादोभय
विलक्षणं तु वेदांतवाक्यं तच्च ज्ञातज्ञापकत्वेऽप्यनुष्ठानाप्रतिपादकत्वान्न विधिः स्वतः पुरुषार्थपरमानंदज्ञानात्मके ब्रह्मणि स्वार्थे उपक्रमोपसंहारा
दिषड्विधतात्पर्यलिंगवत्तया स्वतः प्रमाणभूतं सर्वानपि विधीनंतःकरणशुद्धिद्वारा स्वशेषतामापादयदन्यशेषत्वाभावाच्च नार्थवादः तस्माद्

भयविलक्षणमेव वेदांतवाक्यं न च क्वचिदज्ञातज्ञापकत्वमात्रेण विधिरिति व्यपदिश्यते विधिपदरहितप्रमाणवाक्यत्वेन च क्वचिद्भूतार्थवाद इति व्यवह्रिय
त इति न दोषः तदेवं निरूपितं त्रिविधब्राह्मणं एवं च कर्मकांडगुणकांडब्रह्मकांडात्मको वेदो धर्मार्थकाममोक्षहेतुः स च प्रयोगत्रयेण यज्ञनिर्वाहार्थमृ
ग्यजुःसामभेदेन भिन्नः तत्र होत्रप्रयोग ऋग्वेदेन आध्वर्यवप्रयोगो यजुर्वेदेन औद्गात्रप्रयोगः सामवेदेन ब्रह्मयजमानप्रयोगौ त्वत्रैवांतर्भूतौ अथर्व-
वेदस्तु यज्ञानुपयुक्तः शांतिपौष्टिकाभिचारिकादिकर्मप्रतिपादकत्वेनात्यंतविलक्षण एव एवं प्रवचनभेदात् प्रतिवेदं भिन्ना भूयस्यः शाखाः एवं च-
कर्मकांडे व्यापारभेदेपि सर्वासां वेदशाखानामेकरूपत्वमेव ब्रह्मकांड इति चतुर्णां वेदानां प्रयोजनभेदेन भेद उक्तः अथांगानामुच्यते तत्र शिक्षायाः उदात्ता-
नुदात्तस्वरितह्रस्वदीर्घप्लुतादिविशिष्टस्वरव्यंजनात्मकवर्णोच्चारणविशेषज्ञानं प्रयोजनं तदभावे मंत्राणामनर्थकत्वात् तथा चोक्तं मंत्रो हीनः स्वरतो वर्-
णतो वा मिथ्याप्रयुक्तो न तमर्थमाह स वाग्वज्रो यजमानं हिनस्ति यथेंद्रशत्रुः स्वरतोपराधात् इति तत्र सर्ववेदसाधारणी शिक्षा अथ शिक्षां प्रवक्ष्यामीत्या
दिपंचखंडात्मिका पाणिनिना प्रकाशिता प्रतिशाखं च भिन्नरूपाः प्रातिशाख्यसंज्ञिताः अन्यैरेव मुनिभिः प्रदर्शिताः एवं वैदिकपदसाधुत्वज्ञानेनोहादि
कं व्याकरणस्य प्रयोजनं तच्च वृद्धिरादैजित्याद्यध्यायाष्टकात्मकं माहेश्वरप्रसादेन भगवता पाणिनैव प्रकाशितं तत्र कात्यायनेन मुनिना पाणिनी
यसूत्रेषु वार्त्तिकं विरचितं तद्वार्त्तिकोपरि च भगवता पतंजलिना महाभाष्यमारचितं तदेतत्त्रिमुनिव्याकरणं वेदांगं माहेश्वरमित्याख्यायते कौमारा
दिव्याकरणानि तु न वेदांगानि किंतु लौकिकप्रयोगमात्रज्ञानार्थानीत्यवगंतव्यं एवं शिक्षाव्याकरणाभ्यां वर्णोच्चारणपदसाधुत्वे च ज्ञाते वैदिकमं
त्रपदानामर्थज्ञानाकांक्षायां तदर्थं भगवता यास्केन समाम्नायः समाम्नातः स व्याख्यातव्य इत्यादि चाष्टादशाध्यायात्मकं निरुक्तमारचितं तत्र च नामा
ख्यातनिपातोपसर्गभेदेन चतुर्विधं पदजातं निरूप्य वैदिकमंत्रपदानामर्थः प्रदर्शितः मंत्राणां चानुष्ठेयार्थप्रकाशनद्वारेणैव करणत्वात् पदार्थज्ञाना-
धीनत्वाच्च वाक्यार्थज्ञानस्य मंत्रस्य पदार्थज्ञानाय निरुक्तमप्यपेक्षणीयं अन्यथानुष्ठानासंभवात् सृण्येव जर्भरी तुर्फरीतू इत्यादि दुरूहाणां प्रका-
रांतरेणार्थज्ञानस्यासंभावनीयत्वाच्च एवं निघंटवोपि वैदिकद्रव्यदेवतात्मकपदार्थपर्यायशब्दात्मकाः निरुक्तांतर्भूता एव तत्रापि निघंटुसंज्ञ-

अन्येऽपि (अमर) हेमचन्द्रादिप्रणीता कोशाः; सर्वे निघण्टुरूपत्वेन निरुक्तान्तर्गता द्रष्टव्याः;

कः पंचाध्यायात्मको ग्रंथो भगवता यास्केनैव कृतः एवं ऋङ्मंत्राणां पादबद्धछंदोविशेषविशिष्टत्वात् तदज्ञाने च निंदाश्रवणात् छंदोविशेषनिमित्ता।
नुष्ठानविशेषविधानाच्च छंदोज्ञानाकांक्षायां तत्प्रकाशनाय धीश्रीस्त्रीमित्याद्यष्टाध्यायात्मिका छंदोविवृतिर्भगवता पिंगलेन विरचिता तत्राथ लौकिकमित्य
तेनाध्यायत्रयेण गायत्र्युष्णिगनुष्टुप्बृहतीपङ्क्तित्रिष्टुप्जगतीति सप्तछंदांसि प्रसंगान्निरूपितानि व्याकरणे लौकिकपदनिरूपणवत् एवं वैदिककर्मांगदर्शादिका
लज्ञानाय ज्योतिषं भगवता आदित्येन गर्गादिभिश्च प्रणीतं बहुविधमेव एवं शाखांतरीयगुणोपसंहारेण वैदिकानुष्ठानक्रमविशेषज्ञानाय कल्पसूत्राणि।
तानि च प्रयोगप्रतिपादकानि बौधायनकात्यायनादिप्रणीतानि औद्गात्रप्रयोगप्रतिपादकानि लाट्यायनद्राह्यायनादिप्रणीतानि एवं निरूपितः॥
षण्णामंगानां प्रयोजनभेदः चतुर्णामुपांगानामधुनोच्यते तत्र सर्गप्रतिसर्गवंशमन्वंतरवंशानुचरितप्रतिपादकानि भगवता बादरायणेन कृतानि पुराणा
नि तानि च ब्राह्मं १ पाद्मं २ वैष्णवं ३ शैवं ४ भागवतं ५ नारदीयं ६ मार्कंडेयं ७ आग्नेयं ८ भविष्यं ९ ब्रह्मवैवर्त्तं १० लैंगं ११ वाराहं॥
१२ स्कांदं १३ वामनं १४ कौर्मं १५ मात्स्यं १६ गारुडं १७ ब्रह्मांडं १८ चेति अष्टादश आद्यं सनत्कुमारेण प्रोक्तं वेदविदांवराः द्वितीयं ना
रसिंहाख्यं तृतीयं नारदमेव च चतुर्थं शिवधर्माख्यं दौर्वासं पंचमं विदुः अष्टमं मानवं प्रोक्तं ततश्चौशनसेरितं २ ततो ब्रह्मांडसंज्ञं तु वारुणाख्यं त
तः परं ततः कालीपुराणाख्यं विशिष्टं मुनिपुंगवाः ३ ततो वासिष्ठलैंगाख्यं प्रोक्तं माहेश्वरं परं ततः सांबपुराणाख्यं ततः सौरं महाद्भुतं ४ पाराशरं त
तः प्रोक्तं मारीचाख्यं ततः परं भार्गवाख्यं ततः प्रोक्तं सर्वधर्मार्थसाधकं ५ एवमुपपुराणान्यनेकप्रकाराणि द्रष्टव्यानि न्यायआन्वीक्षिकी पंचाध्या
यी गौतमेन प्रणीता प्रमाणप्रमेयसंशयप्रयोजनदृष्टांतसिद्धांतावयवतर्कनिर्णयवादजल्पवितंडाहेत्वाभासछलजातिनिग्रहस्थानाख्यानां षोडश
पदार्थानामुद्देशलक्षणपरीक्षाभिस्तत्त्वज्ञानं तस्य प्रयोजनं एवं दशाध्यायं वैशेषिकशास्त्रं कणादेन प्रणीतं द्रव्यगुणकर्मसामान्यविशेषसमवायानां ष
ण्णां पदार्थानां साधर्म्यवैधर्म्याभ्यां व्युत्पादनं तस्य प्रयोजनं एतदपि न्यायपदेनोक्तं एवं मीमांसापि द्विविधा कर्ममीमांसा शारीरक=

म॰भ॰
टी॰भ॰
७

मीमांसाच तत्रद्वादशाध्यायीकर्ममीमांसा अथातोधर्मजिज्ञासेत्यादिरन्वाहार्येचदर्शनादित्यंता भगवताजैमिनिनाप्रणीतातत्रधर्मेप्रमाणं १ धर्मभे
दाभेदौ २ शेषशेषीभावः ३ क्रत्वर्थपुरुषार्थभेदेनप्रयुक्तिविशेषः ४ श्रुत्यर्थपठनादिक्रमभेदः ५ अधिकारविशेषः ६ सामान्यातिदेशः ७ विशेषा
तिदेशः ८ ऊहः बाधः १० तंत्र ११ प्रसंग १२ श्चेतिक्रमेणद्वादशाध्यायानामर्थः तथासंकर्षणकांडमप्यध्यायचतुष्टयात्मकंजैमिनिनाप्रणीतं त
च्चदेवताकांडसंज्ञायांप्रसिद्धमप्युपासनाख्यकर्मप्रतिपादकत्वात् कर्ममीमांसांतर्गतमेव तथाचतुरध्यायीशारीरकमीमांसाअथातोब्रह्मजिज्ञासेत्या।
दिरनावृत्तिःशब्दादित्यंताजीवब्रह्मैकत्वसाक्षात्कारहेतुश्रवणाख्यविचारप्रतिपादकान्यायानुपदर्शयंतीभगवताबादरायणेनकृता तत्रसर्वेषा
मपिवेदांतवाक्यानांसाक्षात्परंपरयावाप्रत्यगभिन्नाद्वितीयेब्रह्मणितात्पर्यमितिसमन्वयःप्रथमाध्यायेनदर्शितः तत्रप्रथमेपादेस्पष्टब्रह्मलिंग।
युक्तानिवाक्यानिविचारितानि द्वितीयपादेत्वस्पष्टब्रह्मलिंगान्युपास्यब्रह्मविषयाणि तृतीयपादेऽस्पष्टब्रह्मलिंगानिप्रायशोज्ञेयब्रह्मवि।
षयाणि एवंपादत्रयेणवाक्यविचारः समापितः चतुर्थपादेतुप्रधानविषयत्वेनसंदिह्यमानान्यव्यक्ताजादिपदानिचिंतितानि एवंवेदांताना
मद्वयेब्रह्मणिसिद्धेसमन्वयेतत्रसंभावितस्मृतितर्कादिविरोधमाशंक्यतत्परिहारःक्रियतइत्यविरोधोद्वितीयाध्यायेनदर्शितः तत्राद्यपादेसांख्ययो
गकाणादिस्मृतिभिः सांख्यादिप्रयुक्तैस्तर्कैश्चविरोधोवेदांतसमन्वयस्यपरिहृतः द्वितीयपादेसांख्यादिमतानांदुष्टत्वंप्रतिपादितं स्वपक्षस्थापन
परपक्षनिराकरणरूप द्वयात्मकत्वाद्विचारस्य तृतीयपादेमहाभूतसृष्ट्यादिश्रुतीनांपरस्परविरोधः पूर्वभागेनपरिहृतः उत्तरभागेनजीव=
विषयाणां चतुर्थपादेइंद्रियविषयश्रुतीनांविरोधपरिहारःतृतीयेध्यायेसाधननिरूपणं तत्रप्रथमेपादेजीवस्यपरलोकगमननिरूपणे
नवैराग्यंनिरूपितं द्वितीयपादेपूर्वभागेनत्वंपदार्थःशोधितःउत्तरभागेनतत्पदार्थःशोधितः तृतीयपादेनिर्गुणेब्रह्मणिनानाशाखापठितपुनरुक्त
पदोपसंहारः कृतः प्रसंगाच्चसगुणविद्यासु शाखांतरीयगुणोपसंहारानुपसंहारौनिरूपितौ चतुर्थपादेनिर्गुणब्रह्मविद्यायाबहिरंगसाध=
नान्याश्रमयज्ञादीन्यंतरंगसाधनानिशमदमनिदिध्यासनादीनिचनिरूपितानि चतुर्थेध्यायेसगुणनिर्गुणविद्ययोःफलविशेषनिर्णयः कृतः ७

तत्रप्रथमे पादे श्रवणाद्यावृत्त्यानिर्गुणब्रह्मउपासनावृत्त्यासगुणब्रह्मसाक्षात्कृत्यजीवतः पापपुण्यालेपलक्षणाजीवन्मुक्तिरभिहिता द्वितीयेपादेम्रियमा
णस्योत्क्रांतिप्रकारश्चिंतितः तृतीयेपादेसगुणब्रह्मविदोमृतस्योत्तरमार्गोभिहितः चतुर्थपादेपूर्वभागेननिर्गुणब्रह्मविदो विदेहकैवल्यप्राप्तिरुक्ता उत्तर
भागेनसगुणब्रह्मविदोब्रह्मलोकस्थितिरुक्तेति इदमेवसर्वशास्त्राणांमूर्द्धन्यंशास्त्रांतरंसर्वमस्यैवशेषभूतमितीदमेवमुमुक्षुभिरादरणीयं श्रीशंकरभगव
त्पादोदितप्रकारेणेतिरहस्यं एवंधर्मशास्त्राणिमनुयाग्यवल्क्यः विष्णुयमांगिरोवसिष्ठदक्षसंवर्त्तशातातपपराशरगौतमशंखलिखितहारीतापस्तंबउश
नोव्यासकात्यायनबृहस्पतिदेवलनारदपैठीनसिप्रभृतिभिः कृतानिवर्णाश्रमधर्मविशेषाणांविभागेनप्रतिपादकानि एवंव्यासकृतंमहाभारतं वाल्मी
किकृतंरामायणंचधर्मशास्त्रमध्यएवांतर्भूतं स्वयमितिहासत्वेनप्रसिद्धंसांख्यादीनांधर्मशास्त्रांतर्भावेपीहस्वशब्देनैवनिर्देशात् पृथगेवसंगतिर्व्या।
ख्या अथवेदचतुष्टयस्यक्रमेणचत्वारउपवेदाः तत्रायुर्वेदस्याष्टौस्थानानिभवंति सूत्रशारीरैंद्रियंचिकित्सानिदानंविमानंविकल्पप्रसिद्धिश्चेतिब्र।
ह्मप्रजापत्यश्विधन्वंतरींद्रभरद्वाजात्रेयाग्निवेशादिभिरुपदिष्टश्चरकेणसंक्षिप्तः तत्रैवसुश्रुतेनपंचस्थानात्मकंप्रस्थानांतरंकृतं एवंवाग्भट्टादिनापि।
बहुविधेतिनशास्त्रभेदः कामशास्त्रमपि आयुर्वेदांतर्गतमेवसुश्रुतेनवाजीकरणाख्यकामशास्त्राभिधानात् तत्रवात्स्यायनेनपंचाध्यायात्मकंकाम
शास्त्रंप्रणीतं तस्यचविषयवैराग्यमेवप्रयोजनं शास्त्रोद्दीपितमार्गेणापिविषयभोगेदुःखमात्रपर्यवसानात् चिकित्साशास्त्रस्यचरोगतत्साधनरोगनिवृत्ति
तत्साधनज्ञानंप्रयोजनं एवंधनुर्वेदः पादचतुष्टयात्मकः विश्वामित्रप्रणीतः तत्रप्रथमोदीक्षापादः द्वितीयः संग्रहपादः तृतीयःसिद्धिपादः चतुर्थः प्र
योगपादः तत्रप्रथमपादेधनुर्लक्षणं अधिकारिनिरूपणंचकृतं अत्रधनुःशब्दः चापेरूढोपिचतुर्विधायुधेषुवर्त्तते तच्चचतुर्विधंमुक्तशरादितत्र मु
क्तमस्त्रमित्युच्यते अमुक्तंशस्त्रमित्युच्यते तदपि ब्राह्मवैष्णवपाशुपतप्राजापत्याग्नेयादिभेदादनेकविधंएवंसाधिदैवतेषुसमंत्रकेषुचतुर्विधायुधे
षुयेषामधिकारः क्षत्रियकुमाराणांतदनुयायिनांचतेसर्वेचतुर्विधाः पदातिरथगजतुरगारूढादीक्षाभिषेकशकुनमंगलकरणादिकंचसर्वमपि

म॰ प्र॰ टी॰ भ॰ ८

प्रथमे पादे निरूपितं सर्वेषां शास्त्रविशेषाणामाचार्यस्य सलक्षणंपूर्वकं संग्रहेण प्रकारो दर्शितः द्वितीयपादे गुरुसंप्रदायसिद्धानां शास्त्रविशेषाणां पुनः
पुनरभ्यासो मंत्रदेवतासिद्धिकरणमपि निरूपितं तृतीयपादे एवं देवतार्चनाभ्यासादिभिः सिद्धानामस्त्रविशेषाणां प्रयोगश्च चतुर्थपादे निरूपितः
क्षत्रियाणां स्वधर्माचरणं युद्धं दुष्टदस्युचौरादिभ्यः प्रजापालनं च धनुर्वेदस्य प्रयोजनं एवं च ब्रह्मप्रजापत्यादिक्रमेण विश्वामित्रप्रणीतं धनुर्वेदशा
स्त्रं एवं गांधर्ववेदशास्त्रं भरतेन प्रणीतं तत्र गीतनृत्यवाद्यभेदेन बहुविधोऽर्थः देवताराधननिर्विकल्पकसमाध्यादिसिद्धिश्च गांधर्ववेदस्य प्रयोजनं एवं
अर्थशास्त्रं च बहुविधं नीतिशास्त्रमश्वशास्त्रं शिल्पशास्त्रं सूपकरणशास्त्रं चतुःषष्टिकलाशास्त्रं चेति नानामुनिभिः प्रणीतं तत्सर्वं तस्य लौकिका लौ
किक तत्तत्प्रयोजनभेदो द्रष्टव्यः एवमष्टादश विद्यास्त्रयीशब्देनोक्ता अन्यथा न्यूनताप्रसंगात् तथा सांख्यशास्त्रं भगवता कपिलेन प्रणीतं अथ
त्रिविधदुःखात्यंतनिवृत्तिरत्यंतपुरुषार्थ इत्यादि षडध्यायं तत्र प्रथमेऽध्याये विषया निरूपिताः १ द्वितीये अध्याये प्रधानकार्याणि २ तृतीये अध्या
ये विषयेभ्यो वैराग्यं ॥ ३ ॥ चतुर्थे अध्याये विरक्तानां पिंगलाकुरचरादीनामाख्यायिका ४ पंचमे अध्याये परपक्षनिर्जयः ५ षष्ठे अध्याये सर्वार्थसंक्षेपः प्र
कृतिपुरुषविवेकज्ञानं सांख्यशास्त्रस्य प्रयोजनं तथा योगशास्त्रं भगवता पतंजलिना प्रणीतं अथ योगानुशासनमित्यादि पादचतुष्टयात्मकं तत्र प्र
थमे पादे चित्तवृत्तिनिरोधात्मकः समाधिरभ्यासवैराग्यरूपं च तत्साधनं निरूपितं द्वितीयपादे विक्षिप्तचित्तस्यापि समाधिसिध्यर्थं यमनियमा
सनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टांगानि निरूपितानि तृतीयपादे योगविभूतयः चतुर्थपादे कैवल्यमिति तस्य च विजाती
यप्रत्ययनिरोधद्वारेण निदिध्यासनसिद्धिः प्रयोजनं पशुपतिमतं पाशुपतशास्त्रं भगवता पशुपतिना पशुपाशविमोक्षणाय अथातः पा
शुपतयोगविधिं व्याख्यास्याम इत्यादि पंचाध्यायं विरचितं तत्राध्यायपंचकेनापि कार्यरूपो जीवः पशुः १ कारणं पशुपतिरीश्वरः योगः पशुपतौ
चित्तसमानं विधिर्भस्मना त्रिषवणस्नानादिर्निरूपितः दुःखांतसंज्ञो मोक्षश्च प्रयोजनं एतदेव कार्यकारणयोगविधिदुःखांता इत्याख्यायंते एवं

वैष्णवैर्नारदादिभिः कृतं पंचरात्रं तत्र वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाश्चत्वारः पदार्था निरूपिताः भगवान् वासुदेवः सर्वकारणं परमेश्वरः तस्मादुत्प
द्यते संकर्षणाख्यो जीवः तस्मान्मनः प्रद्युम्नः तस्मादनिरुद्धो हंकारः सर्वे चैते भगवतो वासुदेवस्यांशभूतास्तदभिन्ना एवेति भगवतो वासुदेवस्य मनो
वाक्कायवृत्तिभिराराधनं कृत्वा कृतकृत्यो भवतीत्यादि च निरूपितं तदेवं दर्शितः प्रस्थानभेदः सर्वेषां च संक्षेपेण त्रिविध एव प्रस्थानभेदः तत्रारंभवाद
एकः परिणामवादो द्वितीयः विवर्त्तवादस्तृतीयः पार्थिवाप्यतैजसवायवीयाश्चतुर्विधाः परमाणवो द्व्यणुकादिक्रमेण ब्रह्मांडपर्यंतं जगदारभंते असदे
व कार्यं कारणव्यापारादुत्पद्यत इति प्रथमः तार्किकाणां मीमांसकानां च सत्वरजस्तमोगुणात्मकं प्रधानमेव महदहंकारादिक्रमेण जगदाका
रेण परिणमते पूर्वमपि सूक्ष्मरूपेण सदेव कार्यं कारणव्यापारेणाभिव्यज्यत इति द्वितीयपक्षः सांख्ययोगपाशुपतानां ब्रह्मणः परिणामो जगदि
ति वैष्णवाः स्वप्रकाशपरमानंदादद्वितीयं ब्रह्म स्वमायावशान्मिथ्यैव जगदाकारेण कल्प्यत इति तृतीयः पक्षो ब्रह्मवादिनां सर्वेषां च प्रस्थानकर्तॄणां
मुनीनां विवर्त्तवादपर्यवसानेनाद्वितीये परमेश्वरे एव वेदांतप्रतिपाद्ये तात्पर्यं न हि ते मुनयो भ्रांताः सर्वज्ञत्वात्तेषां किंतु बहिर्विषयप्रवणानामाप
ततः परमपुरुषार्थे प्रवेशो न संभवतीति नास्तिक्यनिवारणाय तैः प्रकारभेदाः प्रदर्शिताः तत्र तेषां तात्पर्यमबुद्ध्वा वेदविरुद्धेप्यर्थे तेषां तात्पर्यमुत्प्रे
क्षमाणास्तन्मतमेवोपादेयत्वेन गृह्णंतो जनाः ऋजुकुटिलनानापथजुषो भवंतीति न सर्वेषामृजुमार्ग एव प्रवेशो न वा पर्यवसानेपि परमेश्वरस्मा
प्तिरंतः करणशुद्धिविशेषेण पश्चादृजुमार्गाश्रयणादेवेत्यर्थः हरिपक्षेप्येवं ७ एवं सर्वेशं कोडीरेण हरिहरस्वरूपं निरूप्य तदेवार्वाचीनपदस्य स्तो-
तिमहोक्षः खट्वांगमिति हे वरद तव परिपूर्णपरमेश्वरस्यापि एतत्तंत्रोपकरणं तंत्रस्य कुटुंबधारणस्य उपकरणं साधनं तदेवाह महोक्ष इत्यादि।
ना महानुक्षः वृद्धवृषभः खट्वांगं खट्वाया अवयवः शस्त्रविशेषः कापालिकानां प्रसिद्धः परशुः टंकः कुठारो वा अजिनं चर्म भस्म पांशुः
फणिनः सर्पाः कपालं मनुष्यशिरोस्थि चेति सप्तकं नन्वेवं दरिद्रस्तुष्टोपि किं दास्यत्यत आह सुरा इत्यादिना सुरास्तु भवत्सेवया भवद्भ्रूप्रणिहितां

7

भवतो भ्रूविक्षेपमात्रेण समर्पितां तां तामसाधारणीं ऋद्धिं संपत्तिं दधति धारयंति त्वमपि दरिद्रस्त्वद्भक्त्या तु सर्वे सुरास्त्वत्प्रसादात् समृद्धा इति ध्वनि
रेकं तु शब्देनाह यो ह्यन्यान् धनवतः करोति स तदपेक्षया अधिक धनवान्भवति हि प्रसिद्धं लोके ननु तर्हि ईदृशोपि स्वयं कथं महोक्षादिमात्रपरिक
र इत्यत आह नहीत्यादि हि यस्मात्स्वात्मारामं स्वे आत्मनि स्वरूपे चिदानंदघने आरमत्याक्रीडत इति तथा तं न भ्रमयति न मोहयति विषयमृगतृष्णा
विषया इंद्रियार्थाः शब्दस्पर्शरूपरसगंधाः त एव मृगतृष्णा जलबुध्या गृह्यमाणा मरीचिका यथा मृगतृष्णा रश्मिरूपा जलविरुद्धस्वभावापि भ्रांत्या ज
लमयीव आभासते तथा विषया अपि दुःखरूपा भ्रांत्या सुखरूपा आभासंत इति रूपकार्थः यत्र जीवः स्वात्मारामताभ्यासेन विषयासक्तो भवति तत्र
किमु वक्तव्यं नित्यमुक्तः परमेश्वरो विषयैर्नाभिभूयत इत्यभिप्रायः तेन हृषभारूढा खट्वांगपरशुफणिकपालालंकृतचतुर्भुजा चर्मवसना भस्मांगरागफ

> महोक्षः खट्वांगं परशुरजिनं भस्म फणिनः कपालं चेतीयत्तव वरद तंत्रोपकरणम् सुरास्तां
> तामृद्धिं विदधति तु भवद्भ्रूप्रणिहितां न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति ॥ ८ ॥

णिकपालविविधभूषणा माहेश्वरी मूर्तिर्गुरूपदेशेन ज्ञाता स्तुत्यादिभिराराध्येत्यर्थः वस्तुतस्तु पुरुषप्रधानमहदहंकारतन्मात्रेंद्रियभूतानि महो
क्षादिरूपेण प्रमानि भगवंतं महेश्वरमुपासते इत्यागमप्रसिद्धं तस्य जगत्कुटुंबस्य तत्वान्येवोपकरणमिति निगर्वः हरिपक्षे तु महोक्षश्चक्रं अक्षोरथाव
यवके च विभीतके स्यात् अक्षाणि पंडितजना विदुरिंद्रियाणीति धरणिः महस्तेजो रूपं भस्म फणिनः भस्मवत् शुभ्रस्य कोमलांगस्य च फणिनः शेषस्य अ
जिनं शरीरत्वक् खट्वा शय्या तया कपालं के शिरः पाल्यते अनेनेति कपालं शिर उपधानं तस्यैव भस्मफणिनो गंकिंचिदुत्थितावयवविशेषः अथवा के
न जलेन पाल्यत इति कपालं पद्मं शंखो वा तस्मिन्पक्षे भस्मफणिनो गमजिनं च खट्वांगं पर्यंकस्थानीयं अजिनं च उपर्यास्तरणवस्त्रस्थानीयमिति बोधव्यं
तथा परशुरिति परशुरामाभिप्रायेण हे वरद तव एतावत्तंत्रोपकरणमित्यादि पूर्ववत् अथवा विषयमृगतृष्णा विद्यांतःकरणोपरक्तं प्रति विवकल्प

जीवंव्यामोहयंत्यपिएमं अनंतसत्यज्ञानानंदात्मकत्वेनयोगिनां रतिविषयत्वां विवकल्पेनमोहयतिनस्वावरणांशेनाभिभवतिउपाधेः प्रतिबिंबपक्षपातित्वा
त् कीदृशीसास्वात्मास्वः सच्चिदानंदात्मकत्वमेवात्मास्वरूपंयस्याः सातथात्वप्यध्यस्तासास्वसत्तास्फूर्तिप्रदत्वांकथंव्यामोहयेदित्यर्थः अत्रापिचक्रादीनांभ
गवद्विभूतित्वं विष्णुपुराणादौप्रसिद्धं ८ एवंस्तुत्ययोर्हरिहरयोर्निर्गुणंसगुणंचरूपंनिरूपितंसंप्रतिस्तुतेः प्रकारंनिरूपयन् स्तौति ध्रुवंकश्चिदितिहेपुरमथन।
तैः स्तुतिप्रकारैस्त्वांस्तुवन्नजिह्मिनानुलज्जेविस्मितइवजातचमत्कारइवयथाकश्चिदद्भुतंदृष्ट्वाविस्मितस्तत्परवशत्वात्लोकोपहासमगणयन् विच।
ष्टेतनथाहमपिस्तोतुमयंनजानातीतिजनोमामुपहसिष्यतीतिलज्जामगणयन्नत्वन्नुतौप्रवृत्तोस्मीत्यर्थः तैः कैः प्रकारैरित्याह ध्रुवमित्यादि कश्चित्को
पिसांख्यपातंजलमतानुसारीसर्वंसमग्रंजगत् ध्रुवं जन्मनिधनरहितं सदैवगादिति व्यक्तंवदतीत्यर्थः नह्यसतउत्पत्तिः संभवतिनवासतो विनाश इ

**ध्रुवंकश्चित्सर्वंसकलमपरस्त्वध्रुवमिदंपरोध्रौव्याध्रौव्येजगतिगदतिव्यस्तविषये॥**
**समस्तेप्येतस्मिन्पुरमथनतैर्विस्मितइवस्तुवन्जिह्मेमित्वांनखलुननुधृष्टामुखरता॥९॥**

त्याविर्भावतिरोभावमात्रमुत्पत्तिविनाशशब्दाभ्यामभिलप्यतेतेनपरमेश्वरोपिताबन्मात्रसेष्टेनत्वसतउत्पत्तेः सतोवाविनाशस्येत्यभिप्रायः इ
तिसत्कार्यवादएकः पक्षः तथाऽपरोऽन्यः सुगतमतानुसारीसकलमिदं अध्रुवंक्षणिकमितिवदति नहिसतः स्थिरत्वंसंभवति अर्थक्रियाका
रित्वमेवहिसत्वंतच्चसमर्थस्यक्षेपायोगेनविलंबोनउपपद्यतइत्येकस्मिन्नेवक्षणेसर्वार्थक्रियासमाप्तेरुत्तरक्षणेऽ सत्वमेव तथाच परमेश्वर
स्यापिक्षणिकविज्ञानसंतानरूपत्वादसावसतउत्पत्तेरीष्टेनतुसतः स्थिरत्वायेतिद्वितीयः पक्षः सर्वक्षणिकतावादलक्षणः तदुभयपक्षासहिष्णु
श्चपरः तार्किकः समस्तेप्येतस्मिन्जगतिध्रौव्याध्रौव्येनित्यत्वा नित्यत्वेव्यस्तविषयेभिन्नधर्मिवर्त्तिनीगदति आकाशकालदिगात्मनः प

10

म॰ स्त॰
टी॰ म
१०

थिव्यादिपरमाणवोनित्याः कार्यद्रव्याणिचानित्यानि तथाचानित्यानामुत्पत्तिविनाशयोरीष्टेपरमेश्वरः नतुनित्यानामपीत्यर्थः इत्येवंतृतीयःपक्षः
तथाचत्रिष्वप्येतेषुद्वैतागीकारादद्वितीयस्यमात्ररूपस्यपरमेश्वरस्यस्पर्शोपिनास्तीतिसोपाधिकसंकुचितैश्वर्यरूपेणस्तुतिःसर्वथालज्जाकरीत्यर्थः त
हिंकिमितिनलज्जसइत्यतआह ननुअहोखलुनिश्चितंमुखरतावाचालतावृष्टानिर्लज्जातयाचमुखरतैवलज्जामपहरतीत्यर्थः एतेनसर्वप्रकारप्र
वादुकवादानामाभासत्वमुक्तंमद्वितीयवादस्यैवलज्जानास्पदत्वेनसत्यत्वमितिद्रष्टव्यंएतच्चान्वमर्कस्त्वसोमइत्यादौस्पष्टीकरिष्यते हरिपक्षेप्ये
वं तत्रपुरमथनशब्दःप्राग्व्याख्यातः ९ एवंश्लोकनवकेनस्तुतिसामग्रीनिरूप्यस्तुतौप्रस्तुतायांसमस्तप्रभावनामग्रेसरयोर्हरिविरिंच्योरपित्वत्प्र
सादादेवत्वत्साक्षात्कारइत्येवंनिरतिशयंमहात्म्यंप्रकटयन्स्तौतितवैश्वर्यंयत्नाद्यदुपरीतिहेगिरिशतवानुवृत्तिः सेवाकिंनफलतिअ

तवैश्वर्यंयत्नाद्यदुपरिविरिंचोहरिरधः परिछेत्तुंयातावनलमनलस्कंधवपुषः॥
ततोभक्तिश्रद्धाभरगुरुगृणद्भ्यांगिरिशयत्स्वयंतस्थेताभ्यांतवकिमनुवृत्तिर्नफलति १०

पितुसर्वमेवफलतित्वत्साक्षात्कारपर्यंतंफलंददातीत्यर्थः तत्रान्वयव्यतिरेकाभ्यांकारणतांदृढयितुंभगवदनुवृत्तिव्यतिरेकेणफलव्यति
रेकमाह यत्यस्मात् अनलस्कंधवपुषः तेजःपुंजमूर्तेस्तवैश्वर्यंस्थूलरूपंपरिछेत्तुमियत्तयाऽवधारितुंउपरिऊर्ध्वं विरिंचिर्ब्रह्मा अधस्ताच्चहरिर्वि
ष्णुःयत्नात्सर्वप्रयत्नेनयावद्गंतुंशक्तौतावद्यातौगतौ अनलंनअलंनपरिछेत्तुंसमर्थावित्यर्थः यत्रस्थूलरूपमप्यपरिछेद्यंतत्रदूरेसूक्ष्मरूपपरिछेद
संभावनातेनत्वदनुवृत्तिंविनाहरिविरिंच्योःप्रसिद्धमहाप्रभावयोरपित्वंनविषयःतत्रकावार्ताअन्येषामितिव्यतिरेकमुक्त्वान्वयमाह ततस्तस्मात्स्व
यत्नवैफल्यादनंतरंताभ्यांहरिविरिंचिभ्यांस्वाघतुङ्स्थाघायांत्रीपस्मानइतिचतुर्थीतयोर्ज्ञापनायेत्यर्थः कीदृशाभ्यांभक्तिश्रद्धाभरगुरुगृणद्भ्यांभक्तिरत्र
कायिकीसेवाश्रद्धामानसीसेवातयोर्भरोऽतिशयस्तेनगुरुश्रेष्ठंनिरतिशयंयथाभवतितथागृणद्भ्यांस्तुवद्भ्यांवाचिकींसेवांकुर्वद्भ्यांयद्धिगुरुतरंभवति शिलोच्च

१०

यादितत् पवनपर्जन्यादिभिर्नैविक्रियामुपैतिलघुद्रव्यवत् तथास्तुतिरप्यतिगौरववती शिलोच्चयादिस्थानीयानपर्जन्यादिस्थानीयैर्विघ्नैश्चालयितुं
शक्येतिगुरुशब्देनध्वनितं एवंरूपेणतवैश्वर्यंस्तुवद्भ्यांताभ्यांकिमित्याह स्वयंतस्थेस्वयमेवनतुतयोः प्रयत्नेनतस्थे स्वआत्मानंप्रकाशयतिस्म अत्रतः
वैश्वर्यमितिकर्तृपरद्रष्टव्यप्रकाशनार्थंचात्मनेपदं यद्वा गृणद्भ्यामितिकर्त्तरितृतीयास्थितं निवृत्तमितिभावप्रत्ययः ततस्तयोर्निवृत्तावपिकिंतवा
नुवृत्तिर्नफलति अपितुफलत्येवेत्यर्थः यस्मादेवंतस्मात् हरिविरिंचिभ्यामपित्वदनुवृत्त्यैवत्वंसाक्षात्कृतः कावान्यान्येषामित्यन्वयः उक्तः ए
वंचत्वदनुवृत्तिरेवसर्वंफलतीत्यन्वयव्यतिरेकाभ्यांदृढीकृत हरिपक्षेतु गिरौगोवर्द्धनाख्येशेते गोपीरमयन्तितिगिरीशः श्रीकृष्णः अथवागि
रिमंदरंश्यतितनूकरोतिक्षीरोदमथनेतितिगिरिशः योजनिकापूर्ववत् हरिःसर्पःशेषःविरिंचिशेषाभ्यामपित्वत्कृपयैवत्वप्राप्तइतिपूर्ववत् सर्वं

अयत्नादासाद्यत्रिभुवनमवैरव्यतिकरंदशास्योयद्बाहूनभृतरणकंडूपरवशान् शिरः
पद्मश्रेणीरचितचरणांभोरुहबलेः स्थिरायास्त्वद्भक्तेस्त्रिपुरहरविस्फूर्जितमिदम् ११

अत्रानिलेतिक्वचित्पाठः सनसांप्रदायिकः तथाचान्यप्रोक्तंनोर्ध्वंगम्यः सरसिजभुवोनाप्यधः शार्ङ्गपाणेरासीदंतस्तवद्दृतवहस्कंधमूर्त्यास्थि
तस्येति १० अथवलिरावणयोरस्वरयोरपिभगवदनुग्रहंदर्शयन्स्तौति अयत्नादापाद्येत्यादि हेत्रिपुरहरस्थिरायानिश्चलायास्त्वद्भक्तेस्तवसेवायावि
स्फूर्जितमिदंप्रभावोयंकिंविशिष्टायाभक्तेः शिरःपद्मश्रेणीरचितचरणांभोरुहबलेः शिरांस्येवपद्मानिअर्थाद्रावणस्यतेषांश्रेणीपंक्तिः तयारचितःक
ल्पितःचरणांभोरुहयोपादपद्मयोर्वलिरुपहारोयस्यांसातथारावणेनहिनवभिःनिजशिरोभिःस्वहस्तकृत्तैःशंभोरुपहारःकृतइतिपुराणप्रसिद्धं किंतद्वि
स्फूर्जितमित्याह यद्दशास्योरावणः बाहून्विंशतिभुजान्कीदृशान्रणायुद्धायकंडूःखर्जूरतिस्पृहेतियावत् तयापरवशानतदधीनान् अभृतधृत

म॰ स्तो॰
टी॰ म॰
११

वान् रणकंडूर्हि रणेनैव निवर्त्तेत रणसंपत्त्या च सर्वदा तत्कंडूरेव तद्भुजेष्विति भावः तर्हि रणं संपाद्य किमिति तत्कंडूर्न निवर्त्तयतीति चेत् न प्रतिभ-
टाभावादित्याह त्रिभुवनं त्रैलोक्यं अवैरव्यतिकरं न विद्यते वैरस्य विरोधस्य व्यतिकरः कारणं यस्मिंस्तत्तथा आसाद्य संपाद्य त्रैलोक्यवर्त्तिनो वी-
रान् इन्द्रादीन् स्वदासं नीत्वेत्यर्थः तदपि अयत्नात् अनायासेन स्वयमेव रावणपराक्रमं श्रुत्वा सर्वे वीरा दर्पादिकं त्यक्तवंत इत्यर्थः तथा चानायासेन निर्जि-
तत्रिजगतो ऽपि रावणस्य भुजानां कंडूर्नैव शांतेत्यत एव शौर्यातिशयो भगवद्भक्तेरेव प्रभाव इत्यर्थः आसाद्येति क्त्वाप्रत्ययः तस्य प्राप्येत्यर्थः हरिपक्षे तु त्री-
णि जाग्रत्स्वप्नसुषुप्त्याख्यानि पुराणि भक्तानां जीवानां स्वसाक्षात्कारेण हरतीति त्रिपुरहरो विष्णुः हे त्रिपुरहर स्मोत्तरस्य कविशेषो दशास्यो यत्तादृशान् बा-
हून् धृतवान् तत्त्वद्भक्तेरेव पूर्वकृताया इदानीं फलरूपेण परिणममानायाः अत एव स्थिरायाः अनेककल्पव्यवधानेऽपि यावत् फलपर्यंतं स्थायि-
न्याः त्वत्सेवाया विस्फूर्जितमिदं नान्यस्य प्रभावो ऽयमित्यर्थः त्वदीयवैकुंठपुरद्वारपालस्य पार्षदप्रवरस्य ब्रह्मशापव्याजेन त्वदिच्छयैवासुरीं योनिमनु-
भवतो ऽपि रावणस्य त्वद्भक्तिप्रभावादेव निरतिशयपौरुषमित्यर्थः तथा बलेः वैरोचनेः त्वद्भक्तेर्विस्फूर्जितमिदं यागशालायां त्वदागमनं त्वद्याचितो ऽय-
दानं त्वच्चरणांबुजस्य शौद्दिए तत्सर्वस्वद्यन् संबोधयति हे शिरः पद्मश्रेणीरचितचरणांभोरुह अत्रापि बलेरिति संबध्यते बलेः शिर एव पद्मश्रेणीप-
द्ममयी निश्रेणिका यादृक् विक्षेपभूमिस्तस्यां रचितमर्पितं चरणांभोरुहं येन स तथा योगपद्मपीठे हि भगवच्चरणारविंदं तिष्ठतीति शास्त्रप्रसिद्धेः ॥
भगवच्चरणारविंदाधारत्वेन बलेः शिरो ऽपि पद्मपीठत्वेन निरूपितं शिरः शब्दस्य नित्यसापेक्षत्वाच्च अत्र सापेक्षसमासो न दोषाय देवदत्तस्य गुरु-
कुलमितिवत् बलिना खलु भगवद्वामनावतारप्रार्थनया पदत्रयमिता भूमिर्देयेति प्रतिज्ञाते तत्र पदद्वयेनैव सर्वस्मिन् जगति भगवताक्रांते स्व-
सत्यपालनाय तृतीयपदभूमिस्थाने स्वशिर एव बलिना दत्तं तच्च भगवता स्वपादांबुजेनावष्टब्धमिति पुराणप्रसिद्धं तच्चेतादृशः प्रसादो ब्रह्मा-
दिभिरपि लब्धो ऽस्ति तस्माद्बलिकृताया त्वद्भक्तेरेव प्रभावो ऽयमित्यर्थः ॥ ११ ॥ एवं बलिरावणयोर्भक्तिवशादनुग्रहं प्रदर्श्य तयोरेव दर्पवशान्निग्र-

११

हंसदर्शयन्नस्तौति अमुत्वमुह्यतिखलेहे त्रिपुरहर अमुष्य पूर्वश्लोकोक्तस्य रावणस्य प्रतिष्ठा स्थितिः त्वयि अलसचलिताङ्गुष्ठशिरसिसतिपाताले।
प्यलभ्याआसीत् अलसंमंदंयथास्यात्तथाचलितंकंपितंअंगुष्ठाग्रंयेनसतथातस्मिन् चलितमितिकृत्स्नंचलकंपनेचलतेर्मिन् शमनात् तथाचतवां
गुष्ठकंपमात्रेणैवतस्यवीराभिमानिनोऽधःप्रवेशोऽशक्यप्रतीकारआसीदित्यर्थः अमुष्यकिंकुर्वतः त्वदधिवसतावपिकैलासेतवमंदिरेऽपिस्फटिकगि
रौभुजवनंभुजवृंदंविंशतिसंख्याकंबलात् विक्रमयतः अतिशौर्येणव्यापारयतः इममुत्पाट्यलंकायांनेष्यामीत्यभिप्रायेणभुजचेष्टांकुर्वतइत्यर्थः ॥
कीदृशंभुजवनंत्वत्सेवासमधिगतसारंतवसेवयासमधिगतंप्राप्तंसारंबलंयस्यतत्तथात्वत्प्रसादादेवबलमासाद्यत्वद्गृहमप्युत्पाठयतीत्यहोकृतघ्न
तामौढ्यंचेत्यभिप्रायः एवंहिपुराणेप्रसिद्धं भगवत्प्रसादादासादितबलेनरावणेनस्वबलपरीक्षार्थं भगवन्निवासस्य कैलासस्य उत्पाटनमारब्धं

अमुष्य त्वत्सेवासमधिगतसारं भुजवनं बलात्कैलासेपि त्वदधिवसतौ विक्रमयतः अ
लभ्या पातालेप्यलसचलिताङ्गुष्ठशिरसि प्रतिष्ठा त्वय्यासीद्ध्रुवमुपचितो मुह्यति खलः १२

ततश्चपार्वत्याभीतयाप्रार्थितोभगवान्कैलासस्याधोगमनार्थमंगुष्ठमात्रंशनैर्व्यापारयामासतावन्मात्रेणैवक्षीणबलोरावणः पातालंप्रविवे
शपुनश्चकरुणयाभगवतासमुद्धृतइत्यादि ननुभगवत्प्रसादाल्लब्धवीरोरावणःकथंभगवंतंतदानीमेवविस्मृतवानित्यतआह ध्रुवंनिश्चितं
उपचितः समृद्धः सन्खलः कृतघ्नोमुह्यतिकृतंविस्मरतिस्वापचयहेतुमोपनयतीत्यर्थः हरिपक्षेतुहेकैलासकेलिः क्रीडासैवप्रयोजनमस्य
तिकेलः केलेःसिः खड्गोयस्यसकैलासिः इच्छामात्रेणनिर्जितसर्वशत्रोरपिक्रीडार्थमेवनंदकधारणमित्यर्थः अमुष्यबलेः त्वदधिवसतौ त्वन्नि
वासेतवस्वत्वास्पदीभूतेऽपित्रैलोक्येबलात् मदीयमिदंत्रैलोक्यमितिस्वत्वाभिमानात् भुवनंहस्तोदकंविक्रमयतः ममस्वत्यागपूर्वकंएतस्यप्रतिग्र
हीतुः स्वत्वमुद्यामीत्यभिप्रायेणभगवतःपाणावुदकंप्रयच्छतः कीदृशंभुजवनंत्वत्सेवासमधिगतसारंत्वत्सेवयासमधिगतःसारः शोभाभाग्य

R

विशेषोयेनतत्तथातत्पाणिपद्मसंबंधेनातितरांशोभमानमुदकमित्यर्थः तथाच सर्वजगन्निवासस्य तव स्वत्वास्पदीभूतं यन्तत्त्वकीयमिति मत्वा
तुभ्यं दत्तो महानेव बलेरपराधः त्वया तु परमकारुणिकेन प्रतिज्ञातं विक्रमत्रयमिति भूमिदानेपि तस्यासामर्थ्यमापाद्य तस्य मन्नतानिवृत्तये योस्य
एवं दंडः कृतः इत्याह त्वयीति अत्र सद्बलितांगुष्ठशिरसि सति तस्य प्रतिष्ठा स्थितिः पातालेप्यलभ्या आसीत् का वार्ता स्वर्गमर्त्ययोः अथवा पाता
ले विद्यमानस्यापि बलेरिंद्रादिभिरलभ्या प्रतिष्ठा कीर्तिरासीत् तत्र सर्वदा भगवतः सन्निहितत्वादित्यर्थः अलं संसलीलं चलितः कंपितः अंगु
ष्ठः शिरसि अर्थात् बलेः येन तस्मिन् तथा तृतीयविक्रमो भूम्यर्थं बलिना शिरश्च प्रसारिते तत्र च त्वदीयपादांगुष्ठसंबंधमात्रेणैव तस्य पातालप्रवेशो
जात इत्यर्थः ध्रुवमुपचित इत्याद्यर्थांतरन्यासः पूर्ववत् अथवा अलसलीलमसुरो बलिरुपचितः सन्नुह्यति अतो मोहनिवृत्तये ऽपचितः कर्तव्य इति भगवतोऽ

यदृद्धिं सुत्राम्णो वरद परमोच्चैरपि सतीमधश्चक्रे बाणः परिजनविधेयत्रिभुवनः न तच्चित्रं
तस्मिन्वरिवसितरि त्वच्चरणयोर्न कस्याप्युन्नत्यै भवति शिरसस्त्वय्यवनतिः ॥ १२ ॥ ऽभिप्रायवर्णनं

यस्याहमनुगृह्णामि तस्य वित्तं हराम्यहमिति भगवद्वचनात् १२ पूर्वं तु भगवद्विषये समुन्नतयोर्बलिरावणयोरत्यंतमवनतिर्दर्शिता अधुना तत्सा
वनतयोरिंद्रबाणयोरत्यंतमुन्नतिं दर्शयन् हरिहरौ स्तौति यदृद्धिमिति अवनतिः सुत्राम्ण इंद्रस्य ऋद्धिं संपत्तिं परमोच्चैः सतीमपि अधश्चक्रे न्यक्कृ
तवान् बाणो बलिसुतः कीदृशः परिजनविधेयत्रिभुवनः परिजनो दासः तद्वद्विधेयं वश्यं त्रिभुवनं यस्य परिजनमपि वश्यं त्रिभुवनं यस्येति वा सत्त=
था उच्चैः सतीयदधश्चक्रे तदन्यत्र चित्रमपि तस्मिन्बाणे न चित्रं नाश्चर्यं कीदृशे त्वच्चरणयोर्वरिवसितरि नमस्कर्तरि इंद्रसंपत्तेरधःकरणं च त्व
न्नमस्कारस्य न पर्याप्तफलं किंत्वेकदेशमात्रमित्याह न कस्या इति त्वयि विषये शिरसो या ऽवनतिः नमस्क्रिया सा कस्य उन्नत्यै न भवति अपि तु स
र्वामेवोन्नतिं मोक्षपर्यंतां जनयितुं समर्था भवत्येवेत्यर्थः अवनतिरप्युन्नतिहेतुरित्यतिशयोक्तिसंकीर्णोयमर्थांतरन्यासः सर्वोत्कृष्टमचिंत्यमहि

मत्वंचभगवतःसूचयतीतिभावः वरिवस्यातुशुश्रूषाहरिपक्षेतुहेपरमवरदसुत्रामाइंद्रस्यबाणः शरएकोपिऋद्धिंसंपत्तिंउच्चैरधोपिसती त्रिभुव-
नव्यापिनींचक्रेकृतवान् यत्तत्तस्मिन्सुत्राम्णिनचित्रमित्यादिपूर्ववत् त्वत्प्रसादाद्देवःसर्वानसुरानेकेनापिबाणेनजित्वात्रिभुवनराज्यंप्राप्तवा-
नित्यर्थः अत्रबाणइतिशस्त्रमात्रोपलक्षणंकीदृशोबाणः परिजनविधेयमायत्तंत्रिभुवनंयस्मात्सतथाशेषंपूर्ववत् १३ अधुनाकालकू-
टप्रलयजलयोः संहारंदर्शयन्शंकरनारायणौस्तौति अकांडब्रह्मांडक्षयभुवनभय हेत्रिनयनविषंसमुद्रमथनोद्भूतं कालकूटाख्यंगरलं
संहृतवतःपीतवतस्तवकंठेयःकल्माषःकालिमाआसीत् सकालिमातवकंठेश्रियंशोभांननकुरुतेअपितुकुरुतएवननुभगवानितिविशेष-
दर्शीमहानर्थहेतुंविषंकिमितिपीतवानित्यतआह अकांडेअसमयेब्रह्मांडक्षयेमहाप्रलयः विशेषोर्मिवेगात्संभावितस्तस्माच्चकिताभीतादे-

अकांडब्रह्मांडक्षयचकितदेवासुरकृपाविधेयस्यासीद्यस्त्रिनयनविषंसंहृतवतः॥
सकल्माषःकंठेतवनकुरुतेनश्रियमहोविकारोपिश्लाघ्योभुवनभयभंगव्यसनिनः १४॥

वासुराइंद्रबलिप्रभृतयः तेषुकृपादयातयाविधेयस्यवश्यस्यैतत्पालनेसामर्थ्यंनास्तीति विश्वत्राणायविषंपीतवानित्यर्थः ननुविषविकारः
कल्माषःकथंकंठेशोभतेनेत्यतआह अहोइत्यादि अहोआश्चर्येभुवनभयभंगव्यसनिनः परमेश्वरस्यविकारोपिश्लाघ्यःप्रशंसनीयःभु-
वनस्यलोकस्यभयंत्रासस्तस्यभंगोनिरन्वयनाशस्तेनव्यसनेनसर्वमन्यद्विहायक्रियमाणत्वात्व्यसनमस्यास्तीतितथातस्यतेनजगदुपकृतिकृ-
तंदूषणमप्यतिभूषणमेवेत्यर्थः हरिपक्षेतुहेत्रिनयन त्रयाणांलोकानांनयनवत् सर्वावभासक तद्विष्णोःपरमंपदंसदापश्यंतिसूरयः दिवीव
चक्षुराततमितिश्रुतेः अकांडेअकालेब्रह्मांडक्षयोमहाप्रलयःदैनंदिनप्रलयजलपूरवेगात् संभावितस्तस्मात्चकितायेदेवासुराःस्वायंभुव-
मनुप्रभृतयः तद्विषयकृपावशीकृतस्यतवविषंजलं विषंक्ष्वेडं विषंजलमित्यादिकोशात् तच्चप्रलयकालीनंयत्तत्वाराहरूपेणावगाह्ययं।

13

कीकृत्यसंहृतवतः शोषितवतः पंकव्यामिश्रणेनयः कल्माषोमलिनिमा आसीत् सकल्माषः स्तोतृभिर्वर्ण्यमानः अर्थात् स्तोतॄणांकंठेश्रियंशो
भांननकुरुतेअपितुकुरुतएव अर्थांतरन्यासः पूर्ववत् १४ अथकामस्यजननिधनेदर्शयन्हरिहरौस्तौति असिद्धार्थोनैव० परिभवः हेईशाय
स्यस्मरस्यविशिखावाणाः सदेवासुरनरेजगतिदेवासुरनरादिसहितेत्रैलोक्येउत्सृष्टाः क्वचिदपिअसिद्धार्थाअकृतकार्यानैवनिवर्तंते अपितुसि
द्धार्थानित्यंजयिनएवभवंति जयिनइतिस्मरस्यवाविशेषणंनित्यंजयशीलस्येत्यर्थः सएतादृशोपिरूपवानपिस्मरःयथाऽन्येदेवाममजप्याल
थायमपीतिइतरदेववत्तुल्यंत्वांपश्यन्स्मर्तव्यात्माऽभूत्स्मर्तव्यःस्मरणीयएवात्माशरीरंसतथानष्टइत्यर्थः पश्यन्नितिहेतौशतृप्रत्ययः लक्ष
णहेतौचशतुः स्मरणात् तद्देतत् पश्यन्नृषिर्वामदेवः प्रतिपेदइतिवत् तेनइतरदेवसाधारणत्वेनत्वद्दर्शनमेवाव्यवधानेनविनाशहेतुः का

॥ असिद्धार्थानैवक्वचिदपिसदेवासुरनरेनिवर्तंतेनित्यंजगतिजयिनोयस्यविशिखाः ॥
॥ सपश्यन्नीशत्वामितरसुरसाधारणमभूत्स्मरःस्मर्तव्यात्मानहिवशिषुपथ्यःपरिभवः ॥ १५ ॥

वार्त्तोपरिभवादेरित्यर्थः तत्रकैमुत्यन्यायमाह नहीत्यादिहियस्मात्वशिषुजितेंद्रियेषुअन्येष्वपिपरिभवःतिरस्कारःपथ्योहितोनभवतिस्वनाशायै
वसंपद्यतइतियावत् किंपुनःपरमवशिनावरेपरमेश्वरेत्वयीत्यर्थः हरिपक्षेतुहेइतरसुसर्वविलक्षणदेवपूर्वंस्मर्तव्यात्मामृतोपिस्मरःकामस्त्वांपश्यन् अभूत्
जातःत्वत्सकाशात्जातइत्यर्थः पितेवखलुपुत्रंजातमात्रमवलोकयति अतःपुत्रोपितमवलोकयतीतिपश्यन्नभूदित्यनेनजन्यजनकभावोलभ्यतेक
थंजातःसाधारणांतवतुल्यरूपंयथास्यात् आत्मावैपुत्रनामासीतिश्रुतिविरोधइत्याशंकायांवैलक्षण्यमाह नहीत्यादिवशिषुजितेंद्रियेषुहियस्मात् स्मरःन
पथ्यःनहितःतत्रहेतुःपरिभवत्यनर्थेयोजयतीतिपरिभवःकामःखलुसर्वेषांसंसारबंधहेतुः परमेश्वरस्तुसर्वेषांसंसारबंधस्यात्यंतोच्छेदहेतुरितिमहद्वैल
क्षण्यमित्यर्थः असिद्धार्था इत्यादिपूर्ववत् १५ अथजगद्रक्षणार्थंनर्त्तनावतरणंदर्शयन्हरिहरौस्तौति हेईशजगद्रक्षायैत्वंनटसिनृत्यसिसंध्यायांजगति

जिघांसंतंवरलब्धंतंकालवलं महाराक्षसंनिजतांडवेनमोहयसीत्यर्थः त्वंतुजगतांरक्षायैनृत्यसि जगंतितुत्वत्तांडवेनसंशयितान्येवभवंतीत्याह तव
चरणाघातेन सहसासंशयपदंसंकटं महीव्रजति तथाविष्णोःपदं अंतरिक्षं भ्राम्यद्भुजपरिघरुग्णग्रहगणं भुजाएवपरिघाअतिसुवृत्तपीवरदृढ-
दीर्घत्वात् तैर्भ्राम्यद्भिः रुग्णाः पीडिताः ग्रहगणाः नक्षत्रसमूहाः यत्रतत्तथासंशयपदंव्रजतीत्यर्थः तथाद्यौः स्वर्लोकः अनिभृता असंवृता
याजटास्ताभिस्ताडितं तटं प्रांतदेशोयस्याः सातथामुहुर्दौःस्थ्यंदुःस्थत्वंयाति एवंक्रमेण त्रयाणामपिलोकानांसंशयोदर्शितः ननुअसौस-
र्वज्ञोप्युपायमपर्यालोचयन्नेवकिमित्येवंविधतांडवेप्रवृत्तइत्यतआह नन्वित्यादिना ननुअहोविभुतापरममहत्ता प्रभुतेतियावत् वामैवप्रति-
कूलैव अनुकूलमाचरंत्यपिकिंचित्प्रतिकूलमवश्यंकरोतीत्येवशब्दार्थः दृश्यतेहि स्वल्पकोपिराजनिस्वदेशरक्षणाय सेनयासहसंचरतिस्व-

**महीपादाघाताद्व्रजतिसहसासंशयपदंपदंविष्णोर्भ्राम्यद्भुजपरिघरुग्णग्रहगणं मुहु-**
**र्द्यौर्दौःस्थ्यंयात्यनिभृतजटाताडिततटाजगद्रक्षायैत्वंनटसिननुवामैवविभुता ॥ १६ ॥**

देशोपद्रवः किमुततादृशोमहेश्वरइत्यर्थः हरिपक्षेतुहेईशत्वंजगद्रक्षायैनटसिनटवदाचरसि नटशब्दादाचारार्थेक्विप्प्रत्ययलोपेनट-
सीतिरूपं मत्स्यादिभूमिकांभजसीत्यर्थः कस्यामवस्थायांजगद्रक्षणार्थमवतरणमित्युच्यते महीपादाघातादित्यादिना महींपातीति महीपो
राजातस्मादाघातात् सामही सहसासमकालमेवसंशयपदंव्रजति आसमंतात्घातोनाशोऽस्मादितिआघातोहिंस्रः तथाच यदैवहिंस्रस्वरा-
ज्यंतदैवसंकटंव्रजतीत्यर्थः तथाविष्णोःपदं अधिष्ठानं यत्रभगवान्विष्णुःस्वविभूतिभिःसहपूज्यतेतद्विष्णोःपदंदेवयजनाख्यं यज्ञशाला-
दितत् कीदृशंभ्राम्यद्भिःभुजपरिघैःभुजस्थैःपरिघैर्वारुग्णाभग्नाग्रहगणाःसोमपात्रसमूहोयत्रतत्तथायागादिशुभकर्माणियदाध्वंसत

14

इत्यर्थः तथाहेतोः हे स्वयंभु याति अनिभृताजटापांशुः श्रातचिह्नभूताताभिरताडितंस्वभावमिवगमितंतदं तुंगपदं सत्यलोकाख्यं यस्याः सातथापांसडिः भिर्हि वैकुंठलोकोपिनागीक्रियते किंपुनरिंद्रादिलोक इत्यर्थः यदा चैवं तदात्वं नरवदाचरसीत्यर्थः तथा च भगवद्वचनं गीतासु यदायदाहि धर्मस्यग्लानिर्भवतिभारत अभ्युत्थानमधर्मस्यतदात्मानं सृजाम्यहमिति श्रीभागवते च यर्ह्यालयेष्वपिसतां न कथा हरेःस्युः पाषंडिनो द्विजजना वृषला नृदेवाः स्वाहस्वधावषडितिस्मगिरोनयत्र शास्ता भविष्यति कलेर्भगवान्युगांते इत्यादि ननु इच्छामात्रेण जगंति रचितुं क्षमोपि किं मत्स्यादिरूपैः क्लिश्यतीत्यत आह नन्वित्यादि ननु निश्चितं विभुता विभवता संपन्नेतेति यावत् वामैव वक्रैव सत्यपि ऋजो प्रकारे वक्रेणैव प्रकारेण स्वसंपत्तिसफलयितुं संपन्नकार्यं करोतीत्यर्थः तेनाष्टविधमैश्वर्यमात्मनि किं दर्शयन् भक्तानामभिध्यानायतानितानि श्रवणमनोहराणि चरितानि तेन तेन रूपेण विधत्ते भयवानि

| वियद्व्यापी तारागणगुणितफेनोद्गमरुचिः प्रवाहो वारां यः पृषतलघुदृष्टः शिरसि ते ।
| जगद्द्वीपाकारं जलधिवलयं तेन कृतमित्यनेनैवोन्नेयं धृतमहिम दिव्यं तव वपुः ॥ १७ ॥

तिभावः १६ अथ गंगाया उद्धरणधारणं दर्शयन् हरिहरौ स्तौति हे ईश्वर अनेनैव लिंगेन तव दिव्यं दिविभवं सर्वेर्नियंत्वपुः शरीरं धृतमहिमसर्वेभ्यो महत्तरं उन्नेयं ऊहनीयं तववपुषः सर्वमहत्तरत्वं एतावतापि निश्चेतुं शक्यं किमिति प्रमाणांतरमात्रापेक्षितव्यमित्येवकारार्थः इति शब्दः प्रकारार्थे एवं प्रकारेण लिंगेनेत्यर्थः तमेव प्रकारं दर्शयति वियदित्यादि वियत् आकाशं व्याप्नोति आच्छादयतीति तथा तारागणेन नक्षत्रवृंदेन स्वातःपातिता गुणिता शुभ्रत्वादिगुणसजातीयत्वाद्वर्द्धितापेनोद्गमरुचिर्यस्यस तथाय एतादृशो वारां प्रवाहः स तव शिरसि पृषतलघुदृष्टः पृषतादिंदोरपिलघुरल्पतरः पृषतलघुः सदृष्टः अलोकितः तेन तु वारां प्रवाहेण जलधिवलयं जगत् द्वीपाकारं कृतं जलधीनां वृंदं जगत् भूलोकोद्वी

पाकारं जंबूद्वीपादिसप्तकं रूपं यत्र तत्तथा अगस्त्येन हि सप्तसु समुद्रेषु पीतेषु पुनः भगीरथानीत गंगाप्रवाहेणैव तेषां पूरणं जातमिति पुराणप्रसिद्धं
तथा च यो जलराशिस्तव शिरसि विंदोरप्यल्पो दृष्टः स एवात्र कियान् मंदाकिनीनामा वियद्व्याप्यास्ते कियान् भागीरथीति गंगेति च भूलोके सप्त
समुद्रानापूर्यास्ते कियांस्तु भोगवतीसंज्ञया पातालमभिव्याप्यास्ते इत्यनेन तव दिव्यवपुषो महत्वमनुमीयत इत्यर्थः हरिपक्षे तु तारागणैर्गुणितः फे
नाः यस्याः सा तारागणगुणितफेना गंगा तस्या उद्गमे उद्भवे रुचिः शोभा यस्य स तथा शिरसि सर्वलोकानां शिरःस्थानीये ब्रह्मलोके वलिछलने त्रि
क्रमचरणांगुष्ठनिर्मितब्रह्मांडविवरादागतो गंगोत्पत्तिहेतुर्वियद्व्यापको वारां प्रवाहः स तेत्वया पृषतलघुर्दृष्टः विंदोरपि लघुर्यथा स्यात्तथोपल
ब्ध इत्यर्थः अनेनैव लिंगेन तव दिव्यं वपुश्च वलिछलनार्थं दिवि आकाशे आविर्भावितं त्रैविक्रमं रूपं धृतमहिमात्रेयं शेषं पूर्ववत् १७ अथ लंका

रथः क्षोणीयंताशतधृतिरगेंद्रोधनुरथोरथांगेचंद्रार्कौरथचरणपाणिःशरइति दिध
क्षोस्तेकोयंत्रिपुरतृणमाडंबरविधिर्विधेयैः क्रीडंत्योनखलुपरतंत्राः प्रभुधियः॥ १८।

त्रिपुरदाहो दर्शयन् हरिहरौ स्तौति हे ईश त्रिपुरतृणं दिधक्षोस्तव कोयं आडंबरविधिः त्रयाणां पुराणां समाहारस्त्रिपुरं तदेव तृणं अनायासनाश्य
त्वात्तं दग्धुमिच्छोस्तव कोयं महत्प्रयोजनमुद्दिश्येव संभ्रमरचना नहि लोके काष्ठमपि न खल्वछेद्यं कुठारं परिगृह्णाति अनस्तत्वात् अल्पप्रयोजनेन महा
न् प्रयास उचित इत्यर्थः आडंबरविधिमेव दर्शयति क्षोणी पृथ्वी रथरूपेण परिणता शतधृतिर्ब्रह्मा सारथिः अगेंद्रः पर्वतश्रेष्ठो मेरुः सोमसूर्यौ द्वे चक्रे रथचर
णं चक्रं तद्युक्तपाणिर्विष्णुः शरो बाणः चतुर्थं वाकोप्युतोप्यथो शब्दः सर्वत्र वाक्यभेदाय योजनीयः इति शब्दः प्रकारार्थः त्रिभुवनमयीच्छामात्रेण
संहर्तव्ये एवं प्रकारेण सामग्रीसंपादनमाडंबरमात्रमित्यर्थः एवमाक्षिप्य परिहारमाह विधेयैरिति खलु निश्चितं प्रभोरीशस्य बुद्धयः संकल्पाः

15

विशेषाः परतंत्राः पराधीना न भवंति अपितु स्वतंत्रा एव ताः कीदृश्यः विधेयैः स्वाधीनैः परार्थैः क्रीडंत्यः खेलंत्यः नहि क्रीडायां प्रयोजनापे
क्षास्ति तस्माद्धि चित्राणि वस्तूनि स्वाधीनतया क्रीडासाधनी कृत्य क्रीडतस्तव सर्वाणि कार्याणि स्वेच्छामात्रेण कर्तुं च समस्तलोकेवेदनियमानधी
नत्वेन न किंचिदप्यनुचितमित्यर्थः हरिपक्षे तु त्रीणि त्रिकूटगिरिशिखराणि पुराणि आश्रयो यस्येति त्रिपुरं लंकापुरं तस्य तृणं तद्धुमि छ्योल
वको यं श्रीरामरूपेण ससुग्रीवस्य समुद्रबंधनादिराडंबरविधिः रथः क्षोणीत्यादि रूपकं क्षोणीव रथः शतधृतिरिव नियंता अगेंद्र इव धनुः चंद्रा
र्कौ विवरथचक्रे रथचरणपाणिरिव शरः स्वतुल्यवीर्यो बाण इत्यर्थः क्षोण्यादिसदृश रथाद्युपादानमेतादृशात्पल्पप्रयोजनायापेक्षितमु
चितं न भवतीत्यर्थः शेषं पूर्ववत् १८ अथैश्वर्यप्रदयोर्भक्तिं तत्फलं च दर्शयन् हरिहरौ स्तौति हे त्रिपुरहर हरिः विष्णुः तव पादयोः साहस्रं सहस्र

॥ हरिस्ते साहस्रं कमलबलिमाधाय पदयोर्यदेकोने तस्मिन्निजमुदहरन्नेत्रकमलम् ग
तो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा त्रयाणां रक्षायै त्रिपुरहर जागर्ति जगताम् १९ ॥

परिमाणं कमलानां पद्मानां बलिमुपहारं सहस्रकमलात्मकं बलिमित्यर्थः आधाय समर्प्य तस्मिन् कमलसहस्रबलौ एकोने सति ए
केन कमलेन भक्तिपरीक्षार्थं त्वया गोपिते न्यूने सति नियमभंगो माभूदिति तत्पूरणार्थं तदा कमलांतरमलभमानो निजमात्मीयं नेत्रक
मलमेव उदहरत् उत्पाटितवान् यदेवं स्वनेत्रोत्पाटनरूपं भजनं असौ भक्त्युद्रेकः भक्तेः सेवाया अत्यंतप्रकर्षः चक्रवपुषा सुदर्शनरूपेण
परिणतिं गतस्त्रयाणां लोकानां रक्षायै जागर्त्ति परिपालनार्थं सावधान एव वर्तत इत्यर्थः सौरपुराणे पुरा जालंधरनामासुरवधार्थं यच्च भू
म्यां चरणांकितेन चक्रं महेशेन सृष्टं तदेव देवासुरसंग्रामे सुरवधार्थं विष्णुभक्त्या संतुष्टो महेशो दिष्टवेदत्तवान् एवमाख्यायिका पुरा

ण प्रसिद्धा तथा चैवमचिंत्यमाहात्म्यस्त्वमसीति भावः हरिपक्षे तु त्रिपुरहरेति प्राग्व्याख्यातं हरिरिंद्रः तव पादयोः साहस्रं कमलबलिमाधाय की दृशं नेत्रकमलं नेत्राण्येव कमलानि यस्मिन्स्तथा नेत्रसहस्रात्मकं कमलसहस्रबलिमित्यर्थः युगपन्नेत्रसहस्रव्यापारेण त्वच्चरणयोर्दर्शनरूप मारा धनं कृत्वेत्यर्थः आराधनप्रयोजनमाह निजं आत्मानं एकः सहायांतरशून्यः अनेन तस्मिन् एतल्लोकविलक्षणे स्वर्गलोके उदहरत् उद्धृतवा न्स्वर्गलोकाधिपतिमात्मानं कृतवानित्यर्थः यत् तिजमुद्दर्तुं युगपन्नेत्रसहस्रेण त्वच्चरणावलोकनेन त्वमवणं त्वं असौ भक्त्युद्रेकः चक्रवपुषा च क्रंसैन्यं ऐरावतोच्चैःश्रवःप्रभृतितद्रूपेण परिणतः समुद्रमथनेन लक्ष्मीपीयूषादिप्रादुर्भावात् त्रयाणां लोकानां रक्षायै जागर्तीति पूर्ववत् १९ ए वं पूर्वश्लोकेषु परमेश्वराराधनादेव सर्वपुरुषार्थप्राप्तिरन्वयव्यतिरेकाभ्यामुक्ता तत्र केचिन्मीमांसकंमन्याः परमेश्वरनिरपेक्षात्कर्मजनितापू

॥ क्रतौ सुप्ते जाग्रत्त्वमसि फलयोगे क्रतुमतां क्व कर्म प्रध्वस्तं फलति पुरुषाराधनमृते अ
तस्त्वां संप्रेक्ष्य क्रतुषु फलदानप्रतिभुवं श्रुतौ श्रद्धां बद्ध्वा कृतपरिकरः कर्मसु जनः ॥ २० ॥

र्वादेव शुभाशुभफलप्राप्तिरित्याहुस्तान्निराकुर्वन्स्तौति त्रिपुरहरेति संबोधनं पूर्वश्लोकादनुषज्यते क्रतौ यागादिकर्मणि आशुतरविना शिस्वभावत्वात् सुप्ते लीने कारणे सूक्ष्मरूपतां प्राप्ते ध्वस्ते सति क्रतुमतां यागादिकर्मकारिणां कालांतरदेशांतरभावितत्फलसंबंधेन निमित्त त्वं जाग्रदसि प्रबुद्धः त्वं वर्तसे वर्तमाने विहितेन धात्रा जागरणस्य सर्वदास्तित्वमुच्यते तेन सर्वदैवावहितोसीत्यर्थः ननु लिङादिपदवाच्यं वा क्रियायाः स्वर्गादिसाधनत्वान्यथानुपपत्त्या कल्प्यं वा अपूर्वमेव फलयोगाय जागर्ति किमीश्वरेणेत्यत आह क्वेत्यादि प्रध्वस्तं विनष्टं कर्म पुरुषस्य चेतनस्य फलदातुराराधनं विना क्व फलति न क्वापीत्यर्थः लोके न कुत्रापि विनष्टस्य कर्मणः अपूर्वद्वारा फलजनकत्वं दृष्टं लोकानुसारेणैव

म॰ स्मृ॰
टी॰ म॰
१६

देपिकल्पनालोकवेदाधिकरणन्यायात् चेतनस्य तु राजादेराराधितस्य विनैवापूर्वं सेवादिफलजनकत्वं दृश्यते तत्र लोकदृष्टप्रकारेणैव वैदिक
कर्मणामपि फलजनकत्वसंभवेन लोकविरुद्धापूर्वद्वारकल्पनावकाशः अपूर्वं हि लोकसिद्धकारणान्तरनिरपेक्षं वा स्वर्गादिफलं जनयेत् तत्सापेक्षं वा
आद्ये तत्तत्फलोपभोगयोग्यदेहेन्द्रियादिकमपि तानपेक्षेत न चैतदिष्टं सर्वस्यापि सुखदुःखादेः शरीरसंयुक्तात्ममनोयोगादिदृष्टकारणजन्यत्वाभ्युपग
मात् द्वितीये तु लोकसिद्धदेहेन्द्रियाद्यपेक्षावदीश्वरापेक्षापि नियता लोके तथादर्शनात्तस्मात् श्रुतिन्यायसिद्धेश्वरपदार्थधर्मिबाधकल्पनाद्व
रमपूर्वपदार्थस्य नैरपेक्ष्यधर्ममात्रबाधकल्पना फलमत उपपत्तेरितिन्यायात् इदं चापूर्वमभ्युपेत्य तत्सापेक्ष्यत्वमीश्वरस्योक्तं वस्तुतस्तु नापूर्वे
किंचन प्रमाणमस्ति लिङादीनामिष्टाभ्युपायतावाचकत्वात् तदन्यथानुपपत्तेश्च श्रुतिन्यायसहस्रसिद्धपरमेश्वरेणैवोपपत्तयान्नापूर्वसिद्धिः अपूर्वं
तत्फलदातृत्वं च भवद्भिः कल्प्यं अस्माभिस्तु केवलमीश्वरः कल्प्यः तस्य फलदातृत्वादिकं तु चेतनत्वाद्राजादिवल्लोकसिद्धमेव सर्वज्ञत्वेन तत्तत्कर्मा
नुरूपफलदातृत्वान्न वैषम्यनैर्घृण्यादिदोषप्रसंगः यत एवं त्वमेव सर्वकर्मफलदाता अतस्त्वां क्रतुषु श्रौतस्मार्तकर्मसु कालान्तरफलसाधनेषु
फलदानप्रतिभुवं फलदानाय लग्नकमिव संप्रेत्य सम्यक् श्रुतिस्मृतिन्यायैः प्रकर्षेण निश्चित्य कर्मफलदातृत्वसद्भावप्रतिपादिकायां श्रु
तौ एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः कर्माध्यक्षः सर्वभूताधिवासः एष उ ह्येव साधु क
र्म कारयति तं यमुन्निनीषते एष उ एव वामनीरित्यादिकायां श्रद्धां बद्ध्वा अर्थवादत्वप्रयुक्तस्वार्थाप्रामाण्यशंकानिरासेन लोकसिद्धदृढतरत्या
यानुगृहीततया देवताधिकरणन्यायेन स्वार्थप्रामाण्यं निश्चित्य जनः श्रुतिस्मृतिविहितकर्माधिकारी कर्मसु श्रौतस्मार्तेषु कृतपरिकर उद्य
मो येन स तथा कृतारंभो भवतीत्यर्थः प्रतिभूसादृश्यं च एतावन्मात्रे विवक्षितं यथा कश्चिदुत्तमर्णः प्रमाणनिश्चितदीर्घकालावस्थानं स्वधनार्पणस
मर्थं कंचित् प्रतिभुवं निरूप्य अधमर्णे पलायिते मृते वा एतस्मादेव कुशलिनः प्रतिभुवः सकाशात् स्वधनं प्राप्यामीत्यभिप्रायेणायस्मै कस्मैचि

ऽस्थमर्णीयऋणमयच्छति तद्वद्धमर्णस्थानीये कर्मणि प्रलीनेऽपि परमेश्वरादेव प्रतिभूस्थानीयात् एतत्फलं प्राप्स्यामीत्यभिप्रायेणोत्तमर्णस्था नीयो यजमानो निःशंकमेव कर्मानुतिष्ठतीतिभावः हरिपक्षेप्येवं सर्वं पूर्ववत् यद्वा सुजनः साधुजनः कर्मश्रुतिस्मृतिविहितं अकृत अकृतवान् कीदृशः सुजनः परिकरः परिसर्वतः कं सुखं रातीति तथा सर्वेषां सुखकरो हिंसक इत्यर्थः दृढपरिकर इति क्वचित् पाठः तस्य दृढारंभ इत्यर्थः अयं च न सांप्रदायिकः २० एवं भगवत्प्रसादेन क्रतुफलप्राप्तिमुक्त्वा विहितानां शुभफलजनकत्वानुपपत्त्या धर्माख्यमपूर्वं द्वारत्वेन कल्पनीयमिति। पक्षो निराकृतः संप्रति विहिताकरणनिषिद्धकरणयोरशुभफलस्य भगवत्प्रसादासाध्यत्वात्तदर्थं मवश्यमधर्माख्यमपूर्वं कल्पनीयमिति शंका। यां राजाज्ञालंघनादेरिवानर्थफलत्वं दृष्टद्वारेणैव भविष्यतीत्यभिप्रायेण भगवतोऽप्रसादेन क्रतुफलाप्राप्तिमनर्थप्राप्तिं च दर्शयन्स्तौति ह

क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृतामृषीणामार्त्विज्यं शरणद सदस्याः सुरगणाः
क्रतुभ्रेषस्त्वत्तः क्रतुफलविधानव्यसनिनो ध्रुवं कर्तुः श्रद्धाविधुरमभिचाराय हि मखाः २१

दक्षः प्रजापतिः स्वयं क्रियासु अनुष्ठेयासु दक्षः प्रवीणः यज्ञविद्याकुशल इत्यर्थः एतेन विद्वत्त्वमधिकारिविशेषणमुक्तं तथा तनुभृतां शरीरिणां अधीशः स्वामी प्रजापतित्वात् एतेन सामर्थ्यमधिकारिविशेषणमुक्तं एतादृशः क्रतुपतिर्यजमानः तथा ऋषीणां त्रिकालदर्शिनां भृगुप्रभृतीनां। आर्त्विज्यं ऋत्विक्कर्म अध्वर्य्वादिरूपं तथा सुरगणाः ब्रह्मादयो देवगणाः सदस्याः सभ्याः उपद्रष्टारः एतादृशसर्वसामग्रीसंपन्नोऽपि त्वत्तः पर। मेश्वरादप्रसन्नात् क्रतोर्यज्ञस्य भ्रेषो भ्रंशो जातः त्वत्तः कीदृशात् क्रतुफलविधानव्यसनिनः क्रतोर्यज्ञस्य फलं स्वर्गादि तस्य विधानं निष्पादनं तेन व्यसनी तदेकनिष्ठस्तस्मात् क्रतुफलदातृस्वभावोऽपि त्वमवज्ञया क्रतुभ्रंशहेतुतां नीत इत्यर्थः एतदेव दृढयन्नाह ध्रुवमिति ध्रुवं निश्चितं क्रतुफलं

दातरिपरमेश्वरेविषयेश्रद्धाविधुरंभक्तिरहितंयथास्यात्तथाऽनुष्ठितामखाः यागाः कर्तुर्यजमानस्याभिचारायनाशायैवभवंतीत्यर्थः हरिपक्षे
तुतनुभृतामधीशः क्रतुपतिः तनुंस्वशरीरमेवविभ्रतिपुष्णंतीतितनुभृतोदैत्याः तेहिसुरनरपितृभ्योनप्रयच्छंति सर्वंहिंसयास्वशरीरमेवकेवलं
पुष्णंतीतितेषामधीशोराजाबलिः क्रतुपतिर्यजमानः अथवातनून्क्षीणान्विभ्रतिपुष्णंतीतितनुभृतोवदान्याः तेषामधीशोदातृत्वेनाग्रगण्यो
बलिः कीदृशः क्रियादक्षोदक्षः उत्कृष्टान्यक्षाणींद्रियाणियस्यसउदक्षः क्रियादक्षश्चासावुदक्षश्चेतिसतथासुरगणाः सुरेषुदेवेषुगण्यंतइति
सुरगणाः देवतुल्याः पुरुषाः सदस्याः श्रद्धाविधुरत्वंच भगवदनुगृहीतंप्राह्लादिस्वगोत्रैः सहविरोधात् स्वभक्तद्रोहोहिभगवतः स्वद्रोहादप्यधि
कः शेषंपूर्ववत् २१ अथब्रह्ममारीचयोर्मृगरूपयोर्वधंदर्शयन्हरिहरौस्तौति हेनाथनियामकतेनत्वपरमेश्वरस्य धनुष्पाणेः इत्यपि

प्रजानाथंनाथप्रसभमभिकंस्वांदुहितरंगतंरोहिद्भूतांरिरमयिषुमृष्यस्यवपुषा धनुष्पा
णेर्यातंदिवमपिसपत्राकृतममुंत्रसंतंतेद्यापित्यजतिनमृगव्याधरभसः ॥ २२ ॥ ः ॥

नाकस्यमृगव्याधरभसः मृगान्विध्यतीतिमृगव्याधोलुब्धकस्तस्येवरभसउत्साहातिरेकोमृगव्याधरभसः शरएवतथारूपितः सचार्द्रा
नक्षत्रस्वरूपेणपरिणतः पुराणप्रसिद्धः अमुंप्रजानाथंब्रह्माणंदिवंस्वर्गंयातंप्राप्तमपिनक्षत्रमध्येमृगशिरोनक्षत्ररूपेणपरिणतमपि
तथासपत्राकृतं सहपत्रेणशरेणशरीरप्रवेशाद्यातिव्यथांनीतः सपत्राकृतः तादृशमिवात्मानंमन्यमानंरूपकमेतत् शरस्यार्द्रानक्षत्ररूपे
णसंनिधानमात्रंनतुताडनमितिद्रष्टव्यं अथवाशरेणताडितएवब्रह्मारुद्रस्यसक्रोधोत्साह विशेषएवार्द्रानक्षत्ररूपेणपरिणतइतिपुरा
णांतरप्रसिद्धाद्द्रष्टव्यं अतएवत्रसंतं बिभ्यतं अद्यापिनत्यजति इदानीमपि धनुष्पाणिमेवत्वांसर्वदादर्शयतीत्यर्थः नस्वेतादृशंदंडार्हतामाह स्वा

आत्मीयांदुहितरंपुत्रींरोहिद्भूतांलज्जयामृगीभूतांऋष्यस्यमृगस्यवपुषाशरीरेणरिरमयिषुंरमयितुमिच्छुंइयंचेल्लज्जयामृगीभूतातर्ह्यहम
पिमृगरूपेणैनांभजिष्यामीतिबुद्ध्यामृगशरीरेणैवप्रसभंहठेनानिच्छन्तीमपितांगतंरत्यर्थंप्राप्तंतस्यपरमवशिनोपिस्वमर्य्यादातिक्रमेकार।
णंवदन् विशिनष्टि अभिकंकामुकंकामेनाभिभूतत्वात् स्वमर्य्यादोल्लंघिनमित्यर्थः एवंहिपुराणेप्रसिद्धंब्रह्मास्वदुहितरं संध्यामति।
रूपिणीमालोक्यकामवशोभूत्वातामुपगन्तुमुद्यतः साचायंपिताभूत्वामामुपगच्छतीतिलज्जयामृगीरूपाबभूव ततस्तांतथादृष्ट्वाब्रह्मापि
मृगरूपंदधारतच्चदृष्ट्वात्रिजगन्नियन्त्राश्रीमहादेवेनायंप्रजानाथोधर्मप्रवर्त्तकोभूत्वाप्येतादृशंजुगुप्सितमाचरतीतिमहत्यपरा।
धेदण्डनीयोमयेतिपिनाकमाकृष्यशरस्ताडितः प्रक्षिप्तः ततःसब्रह्माऽतिव्रीडितः पीडितश्चसन्मृगशिरोनक्षत्ररूपोबभूवभ।
गवतः श्रीरुद्रस्यशरोपिआर्द्रानक्षत्ररूपोभूत्वातस्यपश्चाद्भागेस्थितः तथाचार्द्रामृगशिरसोः सर्वदासन्निहितत्वाद्द्यापिनत्यजतीत्यु
क्तेहरिपत्तेतु हेनाथरोहिद्भूतांगतंप्रजानाथंदिवंयातमपि धनुष्पाणेस्त्वमृगव्याधरभसोऽद्यापिनत्यजतिरोहितोहरिण्याः सकाशा।
द्भवतीतिरोहिद्हरिणशावकः तस्यभावोरोहिद्तातांगतंहरिणशावकत्वंप्राप्तमित्यर्थः प्रजाःप्राणिनोनाथयति उपतापयतीतिप्र
जानाथोराक्षसः सचप्रकृतेमारीचाख्यः तंकिमर्थंतस्यमृगरूपधारणमित्याह प्रसभमभिकंरिरमयिषुंप्रकृष्टाशौर्य्यादियुक्तासभा
यस्यसप्रसभस्तंतादृशं अभितःकानिशिसंसियस्यसः अभिकोदशग्रीवस्तंसीतापहरणोपायेनक्रीडयितुमिच्छुं तथास्वांदुहितरं॥
अयोनिजांकन्यांसीतांऋष्यस्यवपुषाविचित्रमृगशरीरेणरमयितुमिच्छुंविचित्रमृगरूपंमांदृष्ट्वासीतास्त्रीस्वभावादतिमुग्धामत्स्व
मंग्रहणार्थंश्रीरामंप्रेरयिष्यतिअतोरामेबहुदूरंमयापसारितेलक्ष्मणेचतदन्वेषणार्थंगतेएकाकिनींसीतांरावणःसुखेनहरिष्यती
त्यभिप्रायेणधृतविचित्रमृगरूपमित्यर्थः अतएवतवबाणेनसपत्राकृतत्वात् दिवंपरलोकंयातंमृतमित्यर्थः अमुंमृतमपित्रसंतम

6

द्यापि मृगव्याधरभसेनान्यजतीत्युत्प्रेक्षारूपो ध्वनिः शेषं पूर्ववत् २२ परमवशिनां वरावपि श्रीराममहादेवौ लक्ष्मीपार्वत्यनुकंपया स्त्रैण
मिवात्मानं दर्शितइति प्रतिपादयन् स्तौति हे पुरमथन हे यमनिरत यमनियमाद्यष्टांगयोगपरायण एतेन जितेंद्रियत्वमुक्तं पुष्पायुधं कामं
त्वया तृणवदन्हाय सुष्टं तृणमिव शीघ्रं दग्धं पुरः साक्षादेवनव्यवधानेन दृष्ट्वा निर्दोषचाक्षुषज्ञानविषयी कृत्य कीदृशं पुष्पायुधं स्वस्याः
पार्वत्याः यल्लावण्यं सौंदर्यातिशयः तद्विषया आशंसा परमयोगिनमपि श्रीरुद्रं अस्याः सौंदर्यातिशयेन वशीकरिष्यामीति या प्रत्याशा त
यानिमित्तभूतया धृतं धनुर्येन तं तथा एतेन स्वलावण्यातिशयस्यापि श्रीरुद्रविषयेन किंचित्करत्वमित्युक्तं तथा चैवं स्वलावण्यं वैयर्थ्यं पु
ष्पायुधस्य तृणवद्दाहं च स्वयं साक्षात्कृत्यापि देवी पार्वती इयं चिरकालं मामुद्दिश्य तपः कृतवतीति विरहदुःखमाप्नोत्विति करुणामा

> ||स्वलावण्याशंसाधृतधनुषमह्नाय तृणवत्पुरः प्लुष्टं दृष्ट्वा पुरमथन पुष्पायुधमपि य॥
> दि स्त्रैणं देवी यमनिरत देहार्द्धघटनादवैति त्वामद्धा बत वरद मुग्धा युवतयः ॥ २३ ॥

त्रैणं देहार्द्धघटनात् त्वया स्वशरीरार्द्धे स्थापनाद्धेतोः भ्रमबीजात् यदित्वां सर्वयोगिनां वरं स्त्रैणं यद्ययं मदधीनो न भवेत् कथं मां स्व
शरीरार्द्धे स्थापयेदिति भ्रांत्या स्त्रीसक्तं यदि अवैति विशेषादर्शनात्कल्पयति तत् अद्धा युक्तमेव तस्याः अयुक्तस्यापि युक्तत्वे हेतुमाह बतेत्या।
दि हे वरद अतिदुर्लभं स्वदेहार्द्धमपि दत्तमिति वरदेति योग्यसंबोधनं बत अहो युवतयस्तरुण्यः मुग्धा अतत्त्वज्ञाः स्वभावत एवेति शेषः तथा च सह
जानां युवतिभूषणानां प्रधानं मौग्ध्यमनुकुर्वत्याः स्वरूपतस्थितिरूपाया अपि देव्या मिथ्याज्ञानं युक्तमित्यर्थः हरिपक्षे तु हे अर्द्धघटनादव
घटनाया अर्द्धं अर्द्धघटना अर्द्धपिप्पलीतिवत् तस्याः दवः वनवह्निः दाहकइतियावत् सीतारूपायाः लक्ष्म्याः रामरूपेणाचितात्॥

संयोगात् स्वेच्छयार्द्धसंभोगं दत्त्वा अर्द्धविभक्तं भर्त्तृत्वान् असीत्यर्थः सा पूर्वश्लोकोक्ता देवी सीतारूपा लक्ष्मीः कीदृशी यमनिरते हे अत्यंतपतिव्रता तथा पुरमथनपुष्पाः पुरस्य शरीरस्य मथनानि पीडकानि पुष्पाणि यस्याः सा तथा पुष्पाणामपि स्पर्शासहा अतिसुकुमारांगीत्यर्थः त्वां श्रीरामरूपं यदि स्त्रैणं इति मन्येत् इति रहत्यादि पूर्ववत् त्वां कीदृशं स्वलावण्याशंसक्कीयं लावण्यमत्र शौर्यादिगुणकृतं सौंदर्यं तस्मिन्नाशायस्य सस्वलावण्याशंसः सीताया अनुद्धरणेऽस्वस्य शौर्यादिप्रसिद्धिर्गच्छेदिति स्वकीर्त्तिरक्षार्थिनमित्यर्थः अतएव धृतधनुषं सज्जीकृतकोदंडं इदमेकं भ्रमबीजं भ्रमबीजांतरमाह अन्हाय तृणवत् पुरः प्लुष्टं दृष्ट्वा शीघ्रमेव तृणस्येव पुरो लंकाख्यायाः प्लुष्टदाहं भावेक्तः त

> श्मशानेष्वाक्रीडा स्मरहर पिशाचाः सहचराश्चिताभस्मालेपः स्रगपि नृकरोटीपरिकरः ॥
> अमंगल्यं शीलं तव भवतु नामैवमखिलं तथापि स्मर्त्तॄणां वरद परमं मंगलमसि ॥ २४ ॥

था आयुधयुद्धमपि दृष्ट्वा आयुधशब्दस्य शस्त्रे युद्धे चानुशासनात् तथाच स्वकीर्त्तिरक्षार्थं अत्यंतपतिव्रतायाश्च देव्याः कारुण्येन क्लेशविमोचनार्थं सज्जीकृतकोदंडं त्वां अर्द्धघटनात् एवमपि अयं यदि मदधीनो न भवेत् तदा कथमेतादृशदुष्करकर्मणि मामुद्दिश्य कुर्यादिति भ्रमेण स्त्रीसक्तमिव कल्पयतीत्यर्थः २३ अथ त्वयममंगलशीलं तथा क्रीडन्नपि भक्तानां मंगलमेव ददासि स्वयममंगलशीलानामपि भक्तानां त्वमेव मंगलमसीति च वदन् शंकरनारायणौ स्तौति हे स्मरहर हे वरद तव अखिलमपि शीलं सर्वमपि चरितं एवंप्रकारेण अमंगल्यं मंगलविपरीतं भवतु नाम किं नस्तेन निरूपितेनेत्यर्थः तथापि स्वयममंगल्यशीलोऽपि स्मर्त्तॄणां तव स्मरणकर्त्तॄणां त्वं परमं मंगलमेव ॥

सि निरतिशयं कल्याणमेव भवसि तेनामंगलशीलोयं रुद्रो न मंगलकामैः सेवनीय इति भ्रमं परिहृत्य मनोवाक्कायप्रणिधानैः सर्वदा सर्वैः स
वनीयोसीत्यर्थः एवं पदसूचितममंगल्यशीलमेव दर्शयति श्मशानेष्वित्यादि शवशयनेषु समंतात् केलिः पिशिताशनाः प्रेताः सहायाः श
वदाहभस्म अंगरागसाधनं मनुष्यशिरोस्थिसमूहो माला अपिशब्दादन्यदप्यार्द्रचर्मादि हरि पदेतु हे वरद तव स्मर्तॄणाम मंगल्यं शीलं भवतु नाम
तथापि तेषां त्वमेव परमं मंगलमसीत्यर्थः तथा च गीतासु अपि चेत्सुदुराचारो भजते मामनन्यभाक् साधुरेव स मंतव्यः सम्यग्व्यवसितो हि स इति अथवा
तव नाम स्मर्तॄणामिति योज्यं नाममात्रं स्मरतामपि परमं मंगलमसि त्वां स्मरतां तु किमु वाच्यमित्यर्थः कीदृशं नाम अखिलं न खिलं फलरहितं अखि
लं सर्वदा सर्वत्र सफलमित्यर्थः अत्यंतपापिष्ठत्वेन प्रसिद्धानामजामिलादीनामपि त्वन्नाममात्रस्य पुत्रनामत्वेन मरणव्यथया प्रशिथिलकरणत्वे
न च मंदमुच्चारणेपि सर्वपापक्षयद्वारा परमपुरुषार्थप्राप्तिश्रवणात् अमंगल्यं शीलमेव दर्शयति श्मशानेष्वित्यादिरूपेण अत्यंततिरस्कृत
वाच्यो ध्वनिरयं लक्षणामूलः शवशयनतुल्येषु सर्वदा रोदनप्रधानेषु गृहेषु आईषत् क्रीडा अल्पकालं वैषयिकतुच्छसुखप्राप्तिरित्यर्थः तथा
स्मरहर पिशाचाः सहचराः स्मरणं स्मरः शास्त्रीयो विवेकस्तं हरंतीति स्मरहराः पिशाचतुल्याः पुत्रभार्यादयः स्मरहराश्च ते पिशाचाश्चेति स्मरहर
पिशाचाः यथा पिशाचाः स्वावेशेन ज्ञानलोपं कृत्वा पुरुषमनर्थे योजयंति तथा पुत्रभार्यादयोपि तादृशा अवस्तुगत्या वैरिणोपि सहैव चरंति न क्षण
मपि त्यजंतीति सहचराः तथा चिताभस्मतुल्य आलेपः देहस्य विण्मूत्रपूयादिपूर्णत्वेनातिजुगुप्सितत्वात्तदालेपनस्याप्यतिजुगुप्सितत्वं तथा मनुष्य
शिरोस्थिसमूहतुल्या माला पिशाचतुल्यभार्यादिविनोदहेतुत्वात् अपि शब्दादन्यदपि सर्वं चरितं विषयसंगिनाममंगलमेव एतादृशा अपि
चेत्त्वां त्वन्नाम वा स्मरंति तदा त्वमेव तेषां मंगलरूपेणाविर्भवसीत्यहो ते भक्तवात्सल्यमित्यर्थः हरपक्षेप्येवं योजनीयं २४ अतीतः पं
थानमित्यत्र हि पदार्थत्रयमुपन्यस्तं तत्र कतिविधगुण इत्यनेन सगुणमैश्वर्यं कस्य विषय इत्यनेनाद्वितीयं ब्रह्मस्वरूपं पदे त्वर्वाचीन इत्यनेन न ली॰

लाविग्रहविहारादितत्राजन्मानोलोकाइत्यत्रसामान्यतःपरमेश्वरसद्भावंदृढीकृत्यतैश्वर्ययत्नाद्युपरीत्यादिनासगुणमैश्वर्यंली
लाविग्रहविहारादिकंचवर्णितं संप्रत्यद्वितीयब्रह्मस्वरूपंवक्तव्यमवशिष्यतेतदनभिधानेपूर्वोक्तस्यसर्वस्यापितुषकंडनत्वप्रसंगात्
निर्गुणब्रह्मस्वरूपस्यैवसर्वश्रुतिस्मृतितात्पर्यविषयत्वेनसत्यत्वात्सर्वस्यापिप्रपंचस्यस्वप्नप्रपंचवन्मिथ्यात्वात् तस्मान्निर्गुणब्रह्मनिरू
पणायउत्तरग्रंथारंभः तत्रपूर्वश्लोकेत्वंपरमंमंगलमसीत्युक्तं तत्रैवमाशंक्यतेमंगलंहिसुखंनचेश्वरस्यसुखरूपत्वंसंभवतिसुखस्यजन्यत्वा
त् गुणत्वाच्च ईश्वरस्यनित्यत्वादद्रव्यत्वाच्चनित्यज्ञानेच्छाप्रयत्नवानीश्वरोनसुखरूपोनापिसुखाश्रयइतितार्किकाःक्लेशकर्मविपाकाशयैरपरा
मृष्टःपुरुषविशेषईश्वरःश्चितिरूपोपिनसुखरूपइतिपातंजलाःतदेवंनाद्वितीयईश्वरोनापिसुखरूपइत्याशंक्यतस्याद्वितीयपरमानंदरूपत्वेविद्वद

मनःप्रत्यक्चित्तेसविधमवधायात्तमरुतःप्रहृष्यद्रोमाणःप्रमदसलिलोत्संगितदृशः यद
लोकाह्लादंहृदइवनिमज्यामृतमयेदधत्यंतस्तत्वंकिमपियमिनस्तत्किलभवान् ॥२५॥ ऐतुभवं

पंप्रत्यक्त्वंप्रमाणंवदन्स्तौति हेवरदयत्किमपितत्वंइदंतया वक्तुमशक्यं सत्यज्ञानानंतानंदात्मकंवस्तु आलोक्यवेदांतवाक्यजन्यया
डाकारवृत्त्या परोक्षीकृत्ययमिनःशमदमादिसाधनसंपन्नाःपरमहंसाः अंतराह्लादं बाह्यसुखविलक्षणनिरतिशयसुखंदधतिपूर्वंविषया
मेवधारयंतितन्नत्यादयंतिनित्यत्वात् तत्तत्वंकिलभवान् किलेतिप्रसिद्धौ सत्यज्ञानानंतानंदात्मकत्वेनैवश्रुतिषुप्रसिद्धोभवान् ननुतार्किकाद्युक्तप्र
कारःअतस्त्वंकथंपरमंमंगलंनभवसीतिवाक्यशेषःतत्राह्लादस्यनिरतिशयत्वंदर्शयितुंदृष्टांतमाह अमृतमयेह्रदेनिमज्ज्यैवयस्यखलुलेशमात्रम
पिस्पृष्ट्वासकलसंतापोपशमेनसुखिनोभवंति किमुवक्तव्यंतस्यनिमज्जनरूपसर्वांगसंयोगेनेतिकारणातिशयात्कार्यस्याप्यतिशयः सचित्तः

यद्यपि ब्रह्मानंदस्य सर्वातिशयिनो न कोपि दृष्टांतोस्ति तथापीषत्साम्येनापि लोकानां बुद्धिदार्ढ्यायेदमुक्तं ताहृश ब्रह्मानंदानुभवस्यासाधारण कारणमाह मनइत्यादिना चित्ते हृदयांबुजे मनः संकल्पविकल्पात्मकं अवधाय निरुध्य वृत्तिशून्यं कृत्वेति यावत् कीदृशं मनः प्रत्यक् चक्षुरादींद्रियद्वारा वहिर्विषयप्रवृत्तिप्रतिकूलतया तन्मुखतयैवांचतीति प्रत्यक् कीदृशा यमिनः सविधसप्रकारं यथा स्यात्तथा आत्तमरुतः शास्त्रोपदिष्टमार्गेण कृतप्राणायामा इत्यर्थः अत्र सविधमित्यनेन यमनियमासनानि सूच्यंते आत्तमरुत इत्यनेन चतुर्थः कुंभकः विषयेभ्य इंद्रियाणां निवर्तनरूपः प्रत्याहारः प्रत्यक्पदेन सूचितः चित्ते इत्यनेन हृदयांबुजाख्यदेशसंबंधाद्धारणोक्ता अवधायेत्यनेन ध्यानसमाधी तदुक्तं भगवता पतंजलिना देशसंबंधश्चित्तस्य धारणा तत्र प्रत्ययैकताननता ध्यानं तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिरिति चित्तस्य वशीकरणार्थं मू

॥ त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवहस्त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च परिछिन्नामेवं त्वयि परिणता बिभ्रतु गिरम् न विद्मस्तत्तत्त्वं वयमिह हि यत्त्वं न भवसि ॥ २६ ॥

लाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञाख्यचक्राणामन्यतमदेशेऽवस्थापनं धारणोच्यते प्रत्ययस्य एकताननता एकविषयप्रवाहः स च द्विविधः विछिद्य विछिद्य जायमानः संततश्चेतावुभौ क्रमेण ध्यानसमाधी भवतः एतेनाष्टांगयोगपरिपाको ब्रह्मसाक्षात्कारहेतुर्निदिध्यासनरूपत्वेनोक्तः एवं ब्रह्मानंदानुभवस्य कारणमुक्त्वा कार्यमाह प्रहृष्यद्रोमाणः प्रहर्षेण पुलकितांगाः तथा प्रमदे सलिलोत्संगितदृशः हर्षाश्रुपूर्णनेत्राः एतदुभयं च यमिनामानंदानुभवानुमाने लिंगमुक्तं अत्र प्रशब्देन उत्संगितशब्देन च लौकिकसुखापेक्षया तिशयविशेषो व्यज्यते यस्य च तत्त्वस्यालोकनमात्रेणाप्यन्ये परमाह्लादं बिभ्रति तत्स्वयं परमाह्लादं भवतीति किमु वक्तव्यमित्युक्तं विज्ञानमानंदं ब्रह्म आनंदो ब्रह्मे

तिव्यज्ञानात् एषएवपरमआनंदः योवैभूमातत् सुखं कोह्येवान्यात्कः प्राण्याद्यदेषआकाशआनंदोनस्यादित्याद्याः श्रुतयश्चास्मि
न्नर्थेप्रमाणत्वेनद्रष्टव्याः हरिपक्षेप्येवं एवमद्वितीयेब्रह्मणिपरमानंदरूपेसर्वात्मकेविद्वदनुभवरूपंप्रत्यक्षंप्रमाणमुक्तं अधुनातस्यैवाद्विती
यत्वंतर्केणापिसाधयन् स्तौतिहेवरदपरिणताः परिपक्वबुद्धयः त्वयिविषयेएवंपरिच्छिन्नां एवंरूपेणापरिच्छिन्नत्वेनत्वांप्रतिपादयंतीगिरं वा
चंबिभ्रतुधारयंतुनामकेनरूपेणापरिच्छिन्नामित्याह त्वमर्कइत्यादिना अत्रसर्वत्रत्वंशब्दोवाक्यालंकारार्थः उशब्दोऽवधारणेत्वमित्यनेन
संबध्यते चशब्दः समुच्चये इतिशब्दः समाप्तौ अर्कादयः प्रसिद्धाः आत्मातत्रज्ञोयजमानरूपः एतेचाष्टौश्रीरुद्रमूर्त्तित्वेनागमप्रसिद्धाव
स्यमाणभवादिनामाष्टकसहिताश्चतुर्थ्यंतानमोंता अष्टौमंत्राभवंतितेगुरूपदेशेनज्ञातव्या एतदष्टमूर्त्तित्वंचान्यत्राप्युक्तं क्षितिहुतवह
क्षेत्रज्ञांभःप्रभंजनचंद्रमस्तपनवियदित्यष्टौमूर्त्तीर्नमोभवबिभ्रतइति तेनसर्वात्मकमपिअर्काद्यष्टमात्रमूर्त्तित्वांवदंतीत्यर्थः अत्रापरि
णताइत्यस्मिन्नर्थेपरिणताइतिसोपहासंविभ्रत्वितिलोट् चाननुमतावप्यनुमतिप्रकाशनायतेनसर्वथाऽनुचितमेवैतदित्यर्थः त
र्हि किमुचितंज्ञात्वात्वेयदमनुचितमित्युच्यतइत्यतआह नेत्यादिनाहि यस्मादिहजगतितत्तत्त्ववस्तुवयंनजानीमोयद्वस्तुत्वंनभवाऽ
सित्वद्भिन्नमितियावत् अत्रस्वस्यप्रमाणकौशलेनोक्तमर्थंख्यापयितुंविघ्नइतिबहुवचनंवयंतुत्वदभिन्नत्वेनैवयुक्त्यासर्वंजानीमइ
त्यर्थः एवंचतवसर्वात्मकत्वादर्कादिविशेषरूपाभिधानंव्यर्थमेव तथाचश्रुतिः इंद्रंमित्रंवरुणमग्निमाहुरथोदिव्यःससुपर्णोगरुत्मा
न् एकंसद्विप्राबहुधावदंत्यग्निंयमंमातरिश्वानमाहुः एषउह्येवसर्वेदेवाइतिचसर्वदेवभेदंवारयति नहिसदतिरिक्तंकिंचिदुपलभ्यतेस
द्रूपश्चात्मात्वमेवेतितर्केणापिसिद्धमद्वैतं नचसर्वस्यब्रह्मरूपत्वेघटादिज्ञानस्यापिब्रह्मज्ञानरूपत्वात्ततोपिमोक्षप्रसंगइतिवाच्यं अन्या
नुपरक्तचैतन्यभानस्यैवमोक्षहेतुत्वात् घटाकारज्ञानस्यचाविद्यापरिकल्पितान्योपरक्तचैतन्यविषयत्वात् अन्योपरक्तचैतन्यस्यस

४१

रूपेण चक्षुरादिविषयत्वेप्यन्यानुपरक्तस्य तस्य न वेदांतवाक्यमात्रविषयत्वव्याघातः ननु सर्वस्य सन्मात्रत्वेपि नोद्वैतसिद्धिः भिन्नानाम
पि सत्ताजातियोगेन सदाकारबुद्धिविषयत्वसंभवात् अन्यथा द्रव्यगुणकर्मादिभेदव्यवहारो न स्यादिति चेन्न द्रव्यं सत् गुणः सन्नित्यादिप्र
तीतेर्द्रव्यत्वादिधर्मविशिष्टैकसन्मात्रधर्मिविषयत्वमेव न तु द्रव्यादिधर्मिषु भिन्नेषु सत्ताख्यधर्मविषयत्वं धर्मिकल्पनातो धर्मकल्पना
या लघुत्वात् एकस्मिन् सति च सर्वाभिन्ने मायिकनानाप्रतीत्युपपत्तेः द्वौ चंद्रावित्यत्रेव न पारमार्थिकभेदकल्पनावकाशः तथा चायं प्र
योगः अयं द्रव्यगुणादिभेदव्यवहारः सर्वभेदानुगतजात्यात्मकैकवस्तुमात्रावलंबनः भेदव्यवहारत्वात् द्विचंद्रभेदव्यवहारवदिति।
तस्मान्न चेतनमचेतनं वा किंचिदपि परमात्मात्मनो भिन्नमुपपद्यते स एष इह प्रविष्टः अनेन जीवेनात्मनानुप्रविश्येत्यादिश्रुत्यास्र
ष्टुरविकृतस्यैव जीवरूपेण प्रवेशप्रतिपादनात् तथा इदं सर्वं यदयमात्मा इत्यादि ब्रह्मैकोद्भवत्वब्रह्मसामान्यब्रह्मैकप्रलयादिहेतुभिः
स्तुवर्णादिदृष्टांतेनाकाशादिप्रपंचस्य ब्रह्मात्मकत्वप्रतिपादनात् सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति च कंठत एवाद्वितीय।
उक्तः सदाकारप्रत्ययत्वभेदव्यवहारत्वलिंगसर्वात्मश्रुत्यन्यथानुपपत्तिश्चेति प्रमाणत्रयमुक्तं विस्तरेण चात्र युक्तयो वेदांतकल्प।
लतिकायामनुसंधेयाः तस्मान्न विप्र इत्यादिना साधयंश्चोक्तमद्वितीयं हरिपदेतु अर्कादिशब्देन तत्तदवच्छिन्नादेवतात्मान उच्य
न्ते य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपास इत्यादिनाजातशत्रवे दृप्तबालाकिनोपदिष्टाः बृहदारण्यके कौषीतकिब्राह्मणे च प्र
सिद्धाः परिच्छिन्नत्वदोषेणाब्रह्मत्वं चैतेषां तत्रैवाजातशत्रुणा प्रतिपादितं स होवाचाजातशत्रुरेतावन्नू इत्येतावद्धीति नैतावता विदितं
भवतीत्यादिना अन्यत्सर्वं समानं २६ एवं प्रत्यक्षानुमानार्थापत्तिभिरद्वितीयत्वं परमेश्वरस्य सर्वात्मकत्वेन प्रसाध्य तदेवागमे
नापि साधयन्स्तौति अथवा क्रमेण पूर्वश्लोकद्वयेन त्वंपदार्थं तत्पदार्थं च परिशोध्यानेन श्लोकेनाखंडवाक्यार्थं वदन् स्तौतीति है

शरणद आर्तीभयप्रद ओमितिपदं त्वां सर्वात्मानं अद्वितीयं गृणाति अवयवशक्त्या समुदायशक्त्या च प्रतिपादयति अतएवोंकारस्याव
यवशक्त्या वाक्यत्वेपि समुदायशक्त्या पंकजादेरिव पदत्वमुपपन्नं योगरूढि स्वीकारात् तदस्वीकारेपि सुप्तिङंतं पदमिति वैयाकरणपरि
भाषया पदत्वं कृत्तद्धितसमासाश्चेत्यनेन समासस्यापि प्रातिपदिकसंज्ञाविधानात्सुवंतमुपपन्नमेव कीदृशमोमितिपदं समस्तं अका
रोकारमकाराख्यपदत्रयकर्मधारयसमासनिष्पन्नं एतेन समुदायशक्तिरुक्ता तथा व्यस्तं भिन्नं अकार उकार मकार इति स्वतंत्रपदत्र
यात्मकमित्यर्थः एतेनावयवशक्तिरुक्ता इदं च पदद्वयमभिधेयेपि योजनीयं त्वां कीदृशं समस्तं सर्वात्मकं तथा व्यस्तं अध्यात्मा-
धिदेवादिभेदेन भिन्नतया प्रतीयमानं तथा च व्यस्तमोमितिपदं व्यस्तं त्वां गृणाति समस्तमोमितिपदं समस्तं गृणातीत्युक्तं भवति एतदेव

त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरानकाराद्यैर्वर्णैस्त्रिभिरभिदधत्तीर्णविकृति तुरी
यं ते धाम ध्वनिभिरवरुंधानमणुभिः समस्तं व्यस्तं त्वां शरणद गृणात्योमिति पदम् २७॥

दर्शयति त्रयीमित्यादिना त्रयी वेदत्रयं तिस्रो वृत्तयः जाग्रत्स्वप्नसुषुप्ताख्या अंतःकरणस्यावस्थाः एतच्च विश्वतैजसप्राज्ञानामप्युपल
क्षणं त्रिभुवनं भूर्भुवः स्वः एतदपि विराट्हिरण्यगर्भाः व्याकृतानामुपलक्षणं त्रयः सुराः ब्रह्मविष्णुमहेश्वराः एतच्च सृष्टिस्थितिप्र
लयानामुपलक्षणं एतत्सर्वं अकाराद्यैस्त्रिभिर्वर्णैरभिदधत् अभिधावृत्त्या प्रतिपादयत् व्यस्तमित्यर्थः एवमत्र ऋग्वेदो जाग्रदवस्था
भूर्लोको ब्रह्मा चेति चतुष्टयं अकारार्थः तथा यजुर्वेदः स्वप्नावस्था भुवर्लोको विष्णुश्चेति चतुष्टयमुकारार्थः तथा सामवेदः सुषुप्तावस्था
स्वर्लोको महेश्वरश्चेति चतुष्टयं मकारार्थः माण्डूक्यनृसिंहतापनीयाथर्वणशिखादावन्यदप्युक्तं गुरूपदेशात् ज्ञातव्यं अतिरहस्यत्वान्ने

२२

हस्यविशेषमुच्यते तस्मादध्यात्माधिदैवाधिभूताधिवेदाधियज्ञादियावदन्यत्रोक्तमस्ति सर्वं मन्त्रोपसंहर्तव्यं न्यूनतापरिहाराय तथा च
सर्वप्रपंचाकारेणाव्यस्तत्वाम् अकारोकारमकारैर्व्यस्तमोमिति पदमभिदधत्तत्त्वां गृणातीति संबंधः तथा तीर्णविकृतिः सर्वविकारातीतं
तुरीयं अवस्थात्रयाभिमानिविलक्षणं तव धाम स्वरूपमखंडचैतन्यात्मकं तवेति राहोः शिर इतिवद्भेदोपचारेण षष्ठी अखंडभिर्ध्व-
निभिरवरुंधानं स्वतउच्चारयितुमशक्यैरर्द्धमात्रायाः प्लुतोच्चारणवशेन निष्पाद्यमानैः सूक्ष्मशब्दैरवबोधकुर्वन् प्रापयन् समुदायश
क्त्यावोधपर्यन्तमिति यावत् अर्द्धमात्रायाः एकत्वेपि ध्वनिभिरिति बहुवचनं प्लुतोच्चारणेन चिरकालमनुवृत्तायास्तस्या अनेकध्वनि-
रूपत्वान्न विरुद्धं ध्वनेश्चाखंडत्वाखंडतरत्वाखंडतमत्वादिकं गुरूपदेशादधिगंतव्यं तथा चार्द्धमात्रारूपेण समस्तमोमिति पदं समुदायश
क्त्या सर्वविकारातीतं तुरीयं स्वरूपमभिदधत् समस्तत्वां गृणातीति संबंधः एवं च पदार्थाभिधानमुखेनाखंडवाक्यार्थसिद्धिर्यथोक्ता
तथाहि स्थूलप्रपंचोपहितचैतन्यमकारार्थः तत्र स्थूलप्रपंचांशपरित्यागेन केवलं चैतन्यमात्रमकारेण लक्ष्यते तथा सूक्ष्मप्रपंचोप-
हितचैतन्यमुकारार्थः सूक्ष्मप्रपंचांशपरित्यागेनोकारेण लक्ष्यते तथा स्थूलसूक्ष्मप्रपंचद्वयकारणीभूतमायोपहितं चैतन्यं मकारार्थः ता
दृशमायांशपरित्यागेन मकारेण लक्ष्यते एवं तुरीयत्वसर्वानुगमत्वोपहितं चैतन्यं अर्द्धमात्रार्थः तदुपाधिद्वयपरित्यागेनार्द्धमात्रया चैत
न्यमात्रं लक्ष्यते एवं चतुर्णां सामानाधिकरण्यादभेदबोधे परिपूर्णमद्वितीयं चैतन्यमात्रमेव सर्वं द्वैतोपमर्देन सिद्धं भवति लक्षणया
परित्यक्तानां चोपाधीनां मायातत्कार्यरूपत्वेन मिथ्यात्वात् स्वरूपबोधेन च स्वरूपाज्ञानात्मकमायातत्कार्यनिवृत्तेर्न पृथगवस्थानप्र-
संगः नह्यधिष्ठानसाक्षात्कारानंतरमपि तदध्यस्तमुपलभ्यते त्र्यादीनां वाक्यार्थबोधानुपयोगेप्युपासनायामुपयोगात् पृथगभिधा
नं द्रष्टव्यं तस्मात्सर्वं द्वितीयशून्यं प्रत्यगभिन्नं ब्रह्म प्रणववाक्यार्थः इति सिद्धं एतच्च सर्वेषां तत्त्वमस्यादिमहावाक्यानामप्युपलक्षणं॥

तेषामपि प्रत्यगभिन्नपरिपूर्णाद्वितीयब्रह्मप्रतिपादकत्वात् यथा च शब्दादप्यपरोक्षनिर्विकल्पकबोधोत्पत्तिस्तथा प्रपंचितमस्माभिर्वेदांतकल्पलतिकायामित्युपरम्यते हरिपक्षेप्येवं २७ एवं तावद्द्वितीयब्रह्मवाचकत्वेन प्रणव उपन्यस्तः एतस्य चार्थानुसंधानं जयश्च समाधिसाधनत्वेन पतंजलिना सूत्रितः समाधिसिद्धिरीश्वरप्रणिधानादिति ईश्वरप्रणिधानाद्वेति सूत्रांतं तस्य वाचकः प्रणवः तज्जपस्तदर्थभावनमिति सूत्राभ्यां प्रणवजपस्य प्रणिधानार्थत्वेन व्याख्यानात् श्रुतौ च एतदालंबनं श्रेष्ठमेतदालंबनं परं एतदालंबनत्वेन स्त्रीशूद्राद्यनर्हत्वेनासाधारणत्वात् सर्वसाधारणानि प्रसिद्धानि भगवद्वाचकानि पदानि जपार्थत्वेन वदन् स्तौति हे शरणदेव इदं यदभिधानाष्टकं नामाष्टकं अमु

**भवः शर्वो रुद्रः पशुपतिरथोग्रः सहमहांस्तथा भीमेशानाविति यदभिधानाष्टकमिदम् अ**
**मुष्मिन्प्रत्येकं प्रविचरति देव श्रुतिरपि प्रियायास्मै धाम्ने प्रविहितनमस्योस्मि भवते २८ ॥**

ष्मिन् अभिधानाष्टके विषये प्रत्येकं एकैकशः प्रतिनामेति यावत् श्रुतिर्वेदः प्रविचरति प्रकर्षेण बोधकतया व्याप्रियत इत्यर्थः अपिशब्दात्स्मृतिपुराणादिकमपि अथवा प्रणव इवाऽमुष्मिन्नपि श्रुतिः प्रविचरतीति योज्यं यद्यपि चयनकांडे वन्हिनामत्वेनैतानि समाम्नातानि तथापि वन्हेर्भगवद्विभूतित्वात्तन्नामत्वेपि न भगवन्नामत्वव्याघातः यद्वा अमुष्मिन्नामाष्टके देवानां ब्रह्मादीनां श्रुतिः श्रवणेंद्रियं प्रविचरति सावधानतया वर्तते तेपि त्वन्नामश्रवणोत्सुकाः किं पुनरन्य इत्यर्थः किं तन्नामाष्टकमित्याह भव इत्यादिना महत्सम च्छब्देन सह वर्तत इति सहमहान्महादेवः तथैवागमप्रसिद्धेः इति शब्दः समाप्त्यर्थः यस्य च नाममात्रमपि सर्वपुरुषार्थप्रदं स पुनः स्वयं कीदृश इति भक्त्युद्रेकेण प्रणमति

७३

प्रियायेत्यादिनाऽस्मैस्वप्रकाशचैतन्यरूपत्वेनसर्वदाःपरोक्षायभवते महेश्वरायक्रीडशायधाम्नेसर्वेषांशरणभूतायचिद्रूपायेतिवायो
ग्यमुपचारंकंचिदपिकर्तुमशक्नुवन्नहंकेवलंप्रविहितनमस्योस्मिप्रकर्षेणवाङ्मनःकायव्यापारातिशयेनविहितानमस्यानमस्क्रियायेन
सतथाकेवलंतुभ्यंकृतनमस्कारोभवामीत्यर्थः प्रणिहितेतिपाठेप्ययमेवार्थः हरिपक्षेप्येवंभवादीनांचहरिनामत्वयोगरूढ्यासंभवत्येवसहस्रना
मसुपठितत्वाच्चेतिद्रष्टव्यं अथवायदिदमभिधानाष्टकंप्रत्येकंदेवश्रुतिरपिदेवशब्दोपिप्रविचरतिसंवद्धोभवतितथाचभवदेवइत्यादिरूपंतवर
हस्यंनामाष्टकमित्यर्थः तथाचभवस्यरुद्रस्यापिदेवआराध्यइत्यर्थः एवमन्येष्वपिनामसुद्रष्टव्यं २८ एवंजातभक्तुरेकोनसंस्कारमवाप्नुवन्नेयनु
रुद्रमहिमत्वेनभगवंतंस्तौति हेप्रियदवनिर्जनवनविहारकृत्तुभ्यंनेदिष्ठाय अत्यंतनिकटवर्तिनेदविष्ठाय अत्यंतदूरवर्तिनेचनमोनमः हेस्मरहरक्षो

नमोनेदिष्ठायप्रियदवदविष्ठायचनमोनमः क्षोदिष्ठायस्मरहरमहिष्ठायचनमः नमो
वर्षिष्ठायत्रिनयनयविष्ठायचनमोनमः सर्वस्मैतेतदिदमितिसर्वायचनमः ॥२९॥

मोनक्षोदिष्ठायक्षुद्रतरायमहिष्ठायमहत्तरायचतुभ्यंनमोनमः तथात्रिनयनत्रिनेत्रवर्षिष्ठाय अतिवृद्धतराय यविष्ठाययुवतमायचतुभ्यंन
मोनमः एवंविरुद्धस्वभावस्याल्पबुद्धिभिःस्वरूपनिर्णयासंभवात् सर्वदानमस्कारएवकरणीयइतिप्रदर्शनायनमःशब्दावृत्तिः तथाचश्रुतिः
दूरात्सुदूरेतदिहांतिकेच अणोरणीयान्महतोमहीयान् त्वंस्त्रीत्वंपुमानसित्वंकुमारउतवाकुमारी त्वंजीर्णोदंडेनवंचसित्वंजातोभवसिविश्वतो
मुखइत्यादि तथाकिंबहुनासर्वस्मैसर्वस्वरूपायतुभ्यंनमः इदंसर्वंयदयमात्मेतिश्रुतेः ननुतर्हिसर्वेविकाराभिन्नत्वाद्विनाशित्वप्रसंगः इत्याशं
क्यसर्वस्याध्यस्तत्वेनवास्तवतद्भेदाभावात् सर्वबाधाधिष्ठानत्वेनचश्रुतिषुसामानाधिकरण्यव्यपदेशाद्द्वितीयस्यब्रह्मणोनविकारगंधोपि।

संभाव्यत इत्यभिप्रायेण नमस्कुर्वन्नाह तदिदमितिसर्वायच नमः तत्परोक्षं इदमपरोक्षं इति अनेन प्रकारेणानिर्वाच्यं सर्वं यत्र सः तदिदमिति सर्वः तस्मै वहुव्रीहावन्यपदार्थप्रधानत्वान्न सर्वनामता तेन सर्वाधिष्ठानभूताय तुभ्यं नम इत्यर्थः हरिपक्षेप्येवं केवलं संवोधनत्रयं अन्यथाव्या
धा ध्येयं प्रियाणि वैषयिकसुखानि वैराग्योद्बोधेन द्रुनोति नाशयंति प्रियद्रवः तथा स्मर्य्यते ऽनेनेति स्मरो वासना तां हरति स्वभक्तबुद्धेरिति स्मरहरः तथा च त्रयाणां लोकानां नयनवत् सर्वार्थावभासकः त्रिनयनमिति शागपि व्याख्यातं २९ अधुना पूर्वोक्तसर्वार्थसंक्षेपेण नमस्कुर्वन् स्तुतिमुप संहरति विश्वोत्पत्तौ विश्वोत्पत्ति निमित्तं वहलं नमः सत्वाभ्यामधिकं रजो यस्य तस्मै उद्रिक्तरजसे भवत्यस्माज्जगदितिभवो ब्रह्ममूर्त्तिः तस्मै।

॥ वहलरजसे विश्वोत्पत्तौ भवाय नमो नमः प्रवलतमसे तत्संहारे हराय नमो नमः जनसुख
कृते सत्वोद्रिक्तौ मृडाय नमो नमः प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नमः ॥ ३० ॥

तुभ्यं नमो नमः तथा तत्संहारे तस्य विश्वस्य संहारे निमित्तं प्रवलं सत्वरजसी अभिभूयोद्रिक्तं तमो यस्य तस्मै उद्रिक्ततमसे हरतीति हरो रुद्रमू र्त्तिः तस्मै तुभ्यं नमो नमः तथा जनानां सुखकृते सुखनिमित्तं कृत शब्दो ऽव्ययो निमित्तवाची सत्वस्योद्रिक्तौ उद्रेके रजस्तमोभ्यामाधिक्ये स्थिता येत्यर्थो ह्लभ्यते सत्वोद्रेक इतिवा पाठः अथवा सत्वोद्रिक्तौ सत्यां जनानां सुखं करोतीति जनसुखकृत् तस्मै यद्वा सुखस्य कृतं करणं भा वे क्तं तस्मिन् तन्निमित्तं एवं व्याख्याने प्रक्रमभंगदोषो न भवति पूर्वपर्य्यायद्वये उत्तरपर्याये च सप्तम्यंत निमित्तनिर्द्देशात् मृडयति सुख यतीति मृडो विष्णुमूर्त्तिः तस्मै पालनस्यैवोद्देश्यत्वात् क्रमभंगेन पश्चान्नि ॥ ॥ ॥ ॥ ॥ ॥

ईशः एवंगुणत्रयोपाधिं नत्वा निर्गुणं नमति प्रमहसि परे निस्त्रैगुण्ये शिवाय नमो नमः निर्गतं त्रैगुण्यं यस्मात् निस्त्रैगुण्यं तस्मिन् परे परनीये
तत्परप्राप्तिनिमित्तं कीदृशे प्रमहसि प्रकृष्टं मायया ऽनभिभूतं महज्योतिर्यत्र तस्मिन् तथा सर्वोत्तमोत्तमप्रकाशरूपे त्रिगुणशून्यमोत्तनि-
मित्तमित्यर्थः शिवाय निस्त्रैगुण्यमंगलस्वरूपाय शिवमद्वैतं चतुर्थं मन्यत इति श्रुतेः प्रमहसि परे स्थिताय इति वा हरिपक्षेप्येवं ॥३०॥ एवं समस्त
स्वरूपेणैव भगवंतं स्तुत्वा स्वस्यौद्धत्यपरिहारं मन्वितां वाणीमित्यत्रोपक्रांतमुपसंहरन्नाह हे वरद सर्वाभीष्टदेत्युपसंहारयोग्यं संबोध-
नं तव पादयोर्मद्वाक्यपुष्पोपहारं भक्तिराधात् त्वद्विषया रतिः अर्पितवती यथा पुष्पाणि मधुकरेभ्यः स्वमकरंदं प्रयच्छंति अन्येषामपि घ्र-

कृशपरिणति चेतः क्लेशवश्यं क्व चेदं क्व च तव गुणसीमोल्लंघिनी शश्वदृद्धिः ।
इति चकितममंदीकृत्य मां भक्तिराधाद्वरद चरणयोस्ते वाक्यपुष्पोपहारम् ॥ ३१ ॥

ाणं गंधमात्रेणापि प्रमोदमादधति तथैतानि स्तुतिरूपाणि वाक्यानि भक्तिरसिकेभ्यो भगवन्माहात्म्यवर्णनामृतरसं प्रयच्छंति अ-
न्येषामपि श्रवणमात्रेणापि वस्तुस्वाभाव्यात् सुखविशेषमादधतीति ध्वनयितुं पुष्पत्वेन निरूपितं तथा च वाक्यान्येव पुष्पाणि तैरुपहारः
पूजार्थः किं कृत्वा आधात् इत्यनेन हेतुना चकितं स्तुतेर्निवर्तमानं मा अमंदीकृत्य न मंदं कृत्वा बलात् स्तुतौ प्रवर्त्येत्यर्थः तथा चानापत्या
प्रवृत्तस्य मम स्खलितेपि सोढव्यमित्यभिप्रायः इतिशब्देन सूचितं भयकारणमाह कृशेत्यादिना कृशा अल्पा परिणतिः परिपाको यस्य तत्त-
था ऽल्पविषयमित्यर्थः तादृशं मम चेतः चित्तं ज्ञानं वा क्लेशानामविद्यास्मितारागद्वेषाभिनिवेशानां वश्यं आयत्तं सर्वदा रागद्वेषादिदो-

षसहस्रकलुषितमित्यर्थः क्लेशेनअतिप्रयासेन कलुषितमितिवा तेन त्वद्गुणवर्णने अत्यंतायोग्यमित्यर्थः गुणानां सीमासंख्यापरिमाणं येरि
यत्ता तामुल्लंघितुं शीलं यस्याः सा गुणसीमोल्लंघिनी शश्वद्बृद्धिः नित्यविभूतिः तत्तेन हे वरद शठदुर्वासनासहस्रकलुषमल्पस्य विषयं मम मन क्व च अन
ता नित्या तव परमा विभूतिर्वा क्वेति अत्यंतासंभावनाममभयहेतुरित्यर्थः एतदवधारणे च तव भक्तिरेव कारणमिति भक्तेरत्यंतासंभावित
फलदानेऽपि सामर्थ्यं दर्शयति यस्मादेवं तस्मात्सर्वापराधान विगणय्य परमकारुणिकेन त्वया भक्तिरेव ममोद्दीपनीयेतिवाक्यतात्पर्यार्थः॥
३१ अयं श्लोकः स्तोत्रानंतर्गतः सुगमश्चेति सर्वं भद्रं ३२ इममपि श्लोकं पठंति हरिशंकरयोरभेदबोधो भवतु क्षुद्रधियामपीति यत्नात् उभ

कुसुमदशननामा सर्वगंधर्वराजः शशिधरवरमौलेर्देवदेवस्य दासः स खलु निजमहिम्नो भ्रष्ट एवास्य
रोषात्स्तवनमिदमकार्षीद्दिव्य दिव्यं महिम्नः ३२ सुरगुरुमभिपूज्य स्वर्गमार्गैकहेतुं पठति यदि मनु
ष्यः प्रांजलिर्नान्यचेताः व्रजति शिवसमीपं किन्नरैः स्तूयमानः स्तवनमिदममोघं पुष्पदंतप्रणीतम् ३३

यार्थतया मयेदमुक्तं सुधियः साधुधियैव बोधयंतु यतनो वक्रया रीत्या कर्तुं शक्यं विधातरं यद्यपीह तथाप्येष ऋजुरव्याप्रदर्शितः श्लोकाउ
पात्तमिह न प्रसंगात्किंचिदीरितं श्लोकोपात्तमपि स्तोकैरक्षरैः प्रतिपादितं महिम्नाख्यस्तुतेर्व्याख्या प्रतिवाक्यं मनोहरा ३३ स्वयं श्रीमद्गुरोः पा
दपद्मयोरर्पिता मया दीकांतरं कश्चन मंदधीरितः सारं समुद्धृत्य करोति चेत्तदा शिवस्य विष्णोर्हि जगोस्तु पर्वणामपि द्विषद्भावमसौ प्रपद्यते भूतिभू
षितदेहाय द्विजराजेन राजते एकात्मने नमो नित्यं हरये च हराय च इति परमहंसपरिव्राजकाचार्यश्रीमद्विश्वेश्वरसरस्वतीचरणारविंदम
धुकरेण मधुसूदनसरस्वतीसमाख्याधरेण केनचिद्विरचिता महिम्नाख्यस्तुतिव्याख्या समाप्ता॥ ॥ ॥ ॥ ॥ ॥

अहरहरनवद्यंधूर्जटेःस्तोत्रमेतत्पठतिपरमभक्त्याशुद्धचित्तःपुमान्यःसभवतिशिवलोकेरुद्रतुल्यःसत्रा
त्मा प्रचुरतरधनायुःपुत्रवान्कीर्तिमांश्च ३४ दीक्षादानंतपस्तीर्थंहोमयागादिकाःक्रिया महिम्नः
स्तवपाठस्यकलांनार्हंतिषोडशीम् ३५ समाप्तोयंसमेस्तोत्रंसर्वमीश्वरवर्णनम् अनुपममनोहारि
पुण्यंगंधर्वभाषितम् ३६ महेशान्नापरोदेवोमहिम्नोनापरास्तुतिः अघोरान्नापरोमंत्रोनास्तितत्त्वं
गुरोःपरम् ३७ कुसुमदशननामासर्वगंधर्वराजः शशिधरवरमौलेर्देवदेवस्यदासः स्वगुरुनिजम
हिम्नोभ्रष्टएवास्यरोषात्स्तवनमिदमकार्षीद्दिव्यदिव्यंमहिम्नः ३८ सुरवरमुनिपूज्यंस्वर्गमोक्षैक
हेतुंपठतियदिमनुष्यःप्रांजलिर्नान्यचेताः व्रजतिशिवसमीपंकिन्नरैःस्तूयमानः स्तवनमिदममोघं
पुष्पदंतप्रणीतम् ३९ श्रीपुष्पदंतमुखपंकजनिर्गतेनस्तोत्रेणकिल्बिषहरेणहरप्रियेणकंठः
स्थितेनपठितेनसमाहितेनसुप्रीणितोभवतिभूतपतिर्महेशः ॥ ४० ॥ इतिश्रीपुष्पदंताचार्य
विरचितंमहिम्नःस्तोत्रंसंपूर्णंसमाप्तम् ॥ श्रीशुभमस्तु ॥ ॥सर्वजगतां ॥ ॥शुभम् ॥

२५

